शासाव शासाम ॥ लेङि। शिष्यात् शिष्यातां शिष्युः इत्यादि ॥ वश कान्तौ। षत्वष्टुत्वे। अपिति। वचिस्वपियजादीनां यज इक् सिपि षत्वे कत्वादि। वष्टि उष्टः उशन्ति। वक्षि उष्ठः उष्ठ। वश्मि उश्वः उश्मः ॥ लङि ॥ अन्तलुचि षत्वादि। अपिति इकि ऐच्। अवट् औष्टाम् औशन्। अवट् औष्टम् औष्ट। अवशम् औश्व औश्म ॥ लेटि। हेर्धौ। षत्वं। टापि नेट्। वष्टु उष्टाद्वा उष्टाम् उशन्तु। उड्ढि उष्टाद्वा उष्टम् उष्ट। वशानि वशाव वशाम ॥ लेङि। उश्यात् उश्याताम् उश्युरित्यादि ॥ यु अभिगमने ॥

१३७१ हुल्योरौत् ।४।२।२१। उवर्णस्य अङ्डिति हलि ल्यलौ औद्भवति ॥ यौति युतः युवन्ति इत्यादि ॥ लेङि। अलेङ्कृतीति निषेधान्न दीर्घः। युयात् ॥ क्ष्णु तेजने। सम्पूर्वस्त्वे तङ् संक्ष्णुते संक्ष्णुवाते संक्ष्णुवते इत्यादि ॥ स्नु प्रस्रवणे। स्नौति ॥ णु स्तुतौ। णो नः। नौति ॥ इण् गतौ। पित्येङ् अचि ह्निणोऽचीति यञ्। एति इतः यन्ति। एषि इथः इथ। एमि इवः इमः ॥ लङि ऐच्। अच्याय्। ऐत् ऐताम् आयन्। ऐः ऐतम् ऐत। आयम् ऐव ऐम ॥ लेटि। एतु इताद्वा इता यन्तु। इहि इताद्वा इतम् इत। अयानि अयाव अयाम ॥ लेङि। इयात् इयाताम् इयुरित्यादि ॥ इक् स्मरणे। क इत्। एति इत ॥

१३७२ वेकः ।४।२।२। इको धातो अजादौ ल्रूङे यञ् वा भवति ॥ पक्षे इय्। यन्ति इयन्तीत्यादि ॥ या प्रापणे। याति यात यान्तीत्यादि ॥ लङि ॥

१३७३ आद्विपो झेर्जुस्वा ।१।४।१०६। आदन्ताद्विपेश्च परस्य

---

१ 'अङ्डिलुग्घेतौ' 'हल्युकेर्नाचि ल्यलौ' इत्यनुवर्तते। उवर्णान्तस्याद्रिङ्करस्य धातोरङ्डिलुग्घेतौ हलादौ ल्विवर्जितलादेशे परे इक औकारादेशो भवति ॥ हलीति किं? ब्रवीति। यवानि यु मिश्रण लेट्। ओरिति किं? एति अध्येति। अरुद्धिः किं? ब्रवीति। यवानि यु मिश्रण लेट्। ... स्तुयाद्यानाम्। लीति किं? स्तोता। अलानिति किं? ज्याखिट। अङ्डिरिति किं? योयोनि जुहोति। इहोमरान्तस्य धातोर्विधानादिह न भवति। सुनोति ॥

ङितो लः झेर्जुस्वा भवति ॥ ज इत्। श्रुसुसीत्यातो लुक्। अयात् अयाताम् अयुः अयान्वा इत्यादि ॥ लेटि। यातु ॥ लेङि। यायात् ॥ एवं वा गतिगन्धनयोः इत्यादयः आदन्ता नेयाः ॥ चक्षि व्यक्तायां वाचि। इदित्। लङ्। संयोगस्येति कलुक् सयि कलुचि यस्य कः सः षः ध्वादौ जस्त्वष्टुत्वे। चष्टे चक्षाते चक्षते। चक्षे चक्षाथे चड्ढ्वे। चक्षे चक्ष्वहे चक्ष्महे इत्यादि ॥ ईरि गतौ। ईर्ते। ईडि स्तुतौ ॥

१३७४ **ईशीड्भ्यां स्ध्वे** ।४।२।२१। ईशीड्भ्यां परस्यालेर्लेस्सादेः ध्वादेश्च इड् भवति ॥ ट इत्। ईट्टे ईडाते ईडते। ईडिषे ईडाथे ईडिध्वे। ईडे ईड्वहे ईड्महे ॥ ईशि ऐश्वर्ये। इदित्। ईष्टे ईशाते ईशते। ईशिषे ईशाथे इत्यादि ॥ आसि उपवेशने। आस्ते आसाते आसते इत्यादि ॥ शिजुङ् अव्यक्ते शब्दे। उडाविदौ। नम्। शुत्वे नस्य ञः। अनुस्वे ञः। शिङ्क्ते शिञ्जाते शिञ्जते इत्यादि ॥ इङ् अध्ययने। अधीते अधीयाते अधीयते इत्यादि। द्विषी अप्रीतौ। ईदित्। द्वेष्टि द्विष्टे ॥ ऊर्णुञ् आच्छादने ॥

१३७५ **वोर्णोः** ।४।२।२२। ऊर्णुञः अङ्किति हलि स्यलौ औद्वा भवति ॥ ऊर्णोति ऊर्णौति ॥ ष्टुञ् स्तुतौ। यङ्लुविति वा ईट्। स्तवीति स्तौति स्तुते ॥

अथ ह्वादिः ॥ ञिभी भये। ञिदित्। ह्वादित्वात् शपः श्रुपि द्विर्भावादि तसादौ ॥

१३७६ **भ्यो वा** ।४।२।५०। भियोऽपिति यि च हलादौ स्यलौ इद्वा भवति ॥ बिभेति। बिभितः बिभ्यतीत्यादि ॥ पॄ पालनपूरणयोः। इत्व पिपर्ति पिपृतः पिप्रतीत्यादि। ऋ गतौ। इत्वे ॥

१३७७ **पूर्वस्यास्वेऽचीयुव्योः** ।४।१।७६। द्विर्भावे पूर्वस्य इवर्णोवर्णयोरस्वेऽचि परे यथासङ्ख्यं इयुवौ भवतः ॥ इयर्ति इयृतः इयृति ॥ लटि। इयादेशे ऐन्। ऐयः ऐयृताम् ऐयरुः ॥ ओदाक् त्यागे। क इत् ॥

**१३७८ हाकः** ।४।२।५१। हाकोऽपिति यि च इलादौ स्यलो इद्वा भवति॥ जहाति जहीत जहित जहति ॥

**१३७९ आ च हौ** ।४।२।५२। हाको हौ इदाच वा भवत ॥ जहिहि जहीहि जहाहि ॥

**१३८० यि लुक्** ।४।२।५३। हाक यादौ स्यलौ लुग् भवति ॥ जह्यात् ॥ माङ् माने । ङ इत् । इत्व मिमीते मिमाते मिमते ॥ डुभृञ् धारणपोषणयो ॥ डुञ इत इत्व । बिभर्ति बिभृतः बिभ्रति ॥ णिजृर् शौचपोषणयो ॥ ऋन्नावितौ ॥

**१३८१ निजामेत्** ।४।१।९४। निजादीना द्विर्भावे पूर्वस्याच एद्भवति ॥ नेनेक्ति नेनिक्त नेनिजति । जुसादौ व्युक्तेरित्येङरौ न भवत अनेनिजुरित्यादि । विजृर् पृथग्भावे । वेवेक्ति ॥ विषॢर् व्याप्तौ । वेवेष्टि॥

अथ दिवादि ॥ त्रसै उद्वेजने । ऐदित् ॥

**१३८२ भ्राशभ्लाशभ्रमिक्रमिक्लमित्रसित्रुटिलषो वा** ।४।२।२३। एभ्यो धातुभ्य श्ले कर्त्तरि श्यो वा भवति ॥ पक्षे शप् । त्रस्यति त्रसति । त्रुट्यति त्रुटति । तुदादित्वात् श । लष्यति लषति । क्राम्यति क्रामति । व्यध ताडने । इत् । विध्यति । शमु दमु उपशमे । ऊदित्॥

**१३८३ शमां दीर्घोऽष्टानाम्** ।४।२।६३। शमादीनामष्टाना शिति दीर्घो भवति ॥ शाम्यति दाम्यति । तमु काङ्क्षाया ॥ ताम्यति । श्रमु तपसि । श्राम्यति । भ्रमु अनवस्थाने । भ्राम्यति भ्रमति । क्षमू सहने । क्षाम्यति । क्लमु ग्लाने । क्लाम्यति । मदै हर्षे । माद्यति ॥

---

१ 'हल्यघोरी' 'भ्राज्जेरात इत्यनुवर्तते । इत्थाराकारौ वा भवत इत्यर्थ । हल्यघोरीरित्यस्यापवाद ॥

२ णिजृर् विजृर् विषॢर् इति त्रयो निजादय । परतो दिवादय । निजामिति त्रय एवोक्तास्तत परेऽपि किं न विज्ञायन्त इति चेत् तत परे दिवादय । इह श्लुचि परतो यद्द्विर्वचन तन्निमित्तक तत्र पूर्वस्येदमेत्व । न हि दिवादिभ्यो द्विर्वचननिमित्तश्लु नास्ति । जुसादौ व्युक्तेरित्येङरौ प्राप्तौ व्युक्तमोऽपि स्यलौ इति तौ न भवत ॥

**१३८४ यसोऽनुपसर्गात्** ।४।३।२४। अनुपसर्गाद्यस कर्तरि श्ये परे श्यो वा भवति ॥ यसू प्रयत्ने । यस्यति यसति वा ॥

**१३८५ एग्मिदोऽकः** ।४।२।६१। मिदोऽक शित्येद्भवति ॥ ञि मिदा स्नेहने । निदाचेतौ । मेद्यति । जॄष् झॄ वयोहानौ । ष इत् । इर् दीर्घ । जीर्यति । शो तनूकरणे ॥

**१३८६ ओतः श्ये** ।४।२।६६। ओत श्ये लुग् भवति ॥ श्यति ॥ छो छेदने । छ्यति । षो अन्तकर्मणि । स्यति । दो अवखण्डने । द्यति । जनैङ् प्रादुर्भावे । ऐङावितौ ॥

**१३८७ ज्ञाजनो जाः** ।४।२।६०। ज्ञाजनो शिति जा भवति ॥ जायते । रञ्जी रागे । ईदित् ॥

**१३८८ हलो नोऽनर्चाञ्च्युदितः** ।४।१।२२१। हलन्तस्य धातोरुपान्त्यस्य नस्य किति ङिति च प्रत्यये लुग् भवति नार्चायामञ्चे रुदितश्च ॥ रज्यति रज्यते ॥

अथ स्वादि ॥ आप्लृ व्याप्तौ ॥ लृदित् । संयोगपरत्वाद्युतो यन् लुक् च न भवति । आप्नोति आप्नुत आप्नुवन्ति इत्यादि । लेटि । मध्यमपुरुषे आप्नुहि शेष सुगमम् ॥

अथ क्र्यादि ॥ पूञ् पवने । ञ इत् । क्र्यादित्वात् श्ना ॥

**१३८९ प्वा ह्रस्वः** ।४।२।६२। प्वादीना शिति ह्रस्वो भवति ॥ पुनाति पुनीते ॥ लञ् छेदने । लुनाति लुनीते । धूञ् कम्पने । धुनाति धुनीते । स्तॄञ् छादने । स्तृणाति स्तृणीते ॥ कॄञ् हिंसायां । कृणाति कृणीते इत्यादि । ज्या वयोहानौ । वशीति यञ इक् । जिनाति । ज्ञा अवबोधने । जानाति जानीते । क्षुभ सञ्चलने । अन्तक्षुभ्नादीनाम् इति णत्वाभाव । क्षुभ्नाति ॥

अथ तुदादि ॥ भ्रस्जी पाके । तुदादित्वात् श । वशिव्यचीति यञ इक् श्चुत्जश्त्वे । भृज्जति भृज्जते । लिपी उपदेहे । लिपादीति नम् ।

न' परस्वोऽनुनासिक' । लिम्पति लिम्पते । क्षि निवासगत्यो. । इग् । क्षियति । कॄ निक्षेपे । इर् किरति । गॄ निगरणे । इर् ॥

**१३९० ग्रोऽचि** ।४।२।२५७। ग्रो रस्याजादौ प्रत्यये लो वा भवति॥ गिरति । गिलति । दृङ् आदरे । ङित् । रीयौ । आद्रियते । प्रछ ज्ञीप्सायाम् । अदित् । यशीति यत्र इक् । द्वित्वं पृच्छति ॥ ओव्रश्चौ छेदने । ओदौतावितौ । वशिव्यचीतीक् श्चुत्वं वृश्चति । इषु इच्छायाम् । ऊदित् । यङमिति षस्य छ. । द्वित्वम् इच्छति । णू स्तवने । णो नः । उव् । नुवति । ष्वनजि सङ्गे । इदित् । तङ् । हलो न इति न्लुक् षस्सः । स्वजते ।

अथ रुधादिः ॥ तृह हिसु हिंसायाम् । अदित् । रुधादित्वान्नम् ॥

**१३९१ तृणेड्** ।४।२।२४। तृहः अक्ङिति हलादौ स्यलौ तृणेहिति निपात्यते ॥ हो ढ. अध इति तो धः ष्टुत्व ढे ढलुक् । तृणेढि तृण्ढ. तृंहन्ति इत्यादि ॥

अथ चुरादि' । लड उपसेवायाम् ॥ अदित् । णिजादिः ॥

**१३९२ ज्ञर्फिडादीनाम्** ।४।२।२५६। ऋफिडादीनां डस्य रस्य च लो भवति ॥ लालयति । भू कृपो अवकल्पने । भावयति । कृपेररि । ऋफिडादित्वाल्लः । कल्पयति । कथ वाक्यप्रबन्धे । अदित् चुरादित्वाण्णिच् ॥

**१३९३ कथादिपातिस्फायोऽग्लग्यम्** ।४।१।१९७। कथादेर्णौ अग् भवति पातेर्लक् स्फायो वम् ॥ कित् । अत इति लुक् । ञ्णित्यात्वे प्राप्ते ॥

**१३९४ परेऽचः प्राचोऽकिदीर्घयश्चासदस्क्लुग्विधौ** ।१।१।५१।

---

१ घश्च फश्च स्वौ स्कोर्लुक् स्क्लुक् । असत असदधिकारात् आ पर्यन्त आसत् । आसश्चासौ अस्क्लुक्च आसदस्क्लुक् । किश्च दीर्घश्च यश्च द्वौ च आसदस्क्लुक् च तथा। तेषां विधि पुनर्नञ् । किविधि दीर्घस्य विधिं यकारविधिं द्वयोर्द्वित्वस्य विधिं आ एतस्मादारभ्य 'दोर्मोस्यादसो माद्धुश्चान्यसत्' इत्यारभ्य 'नोर्म्यादिभ्य' एतत्पर्यन्त यो विधिर्विधीयते स ॥

अजादेश परनिमित्तक तत पूर्वविधौ कर्तव्ये स्थानीव भवति न क्विदीर्घयद्वित्वविधौ सयोगस्यादिस्कोलुंग्वर्जितासदधिकारपर्यन्तविधौ च ॥ इति स्थानिवद्भावत्वादनुपान्त्यत्वेन अत आत्व भवति। कथयति। एव कथादिगण ॥ मृगि अन्वेषणे। इदित् कथादित्वादकि अत इति लुक् लुग्वेतौ णौ नाद। मृगयते अथ युजादि। ली द्रवीकरणे। णिचि ॥

**१३९५ लीलो नग्लक् स्नेहद्रवे** ।४।१।१९५। लीलयोर्णिचि नग्लकौ भवत स्नेहद्रवे ॥ अकावितौ। विलीनयति ॥ धूञ् कम्पने। ञ इत्। णिच् ॥

**१३९६ प्रीञ्धूञोर्नक्** ।४।१।१९८। प्रीञ्धूञोर्णौ नग् भवति ॥ अकावितौ। धूनयति प्रीणयति ॥

कर्मभावयोर्यक्। अलुगादि। गोपाय्यते गुप्यते इत्यादि। बुध्यते पीयते घ्रायते ध्मायते स्थीयते म्नायते दीयते। दैव् शोधने। व इत् ॥

**१३९७ एचोऽश्याः** ।४।१।१८०। धातोरेच अश्याद् भवति ॥ दायते। दश्यते ॥

**१३९८ यङ्चङ्क्याश्शे** ।४।२।१४। हलद्वयात्परस्य ऋतोऽन्तेश्च यङ्चङ्क्याश्शेषु अर्भवति ॥ अर्यते ॥ स्तृञ् आवरणे। ऊलावितौ ॥

**१३९९ ये वा** ।४।१।२६९। जनसनखना क्ङिति ये आद्वा भवति ॥ खायते खन्यते ॥ अथ अदादि। हन्यते। अस्तेर्भू। भूयते। उच्यते। सुप्यते ॥

**१४०० जागुः किति** ।४।२।१०। जागर्त्तेः ऋत किति अर्भवति ॥ जागर्यते ॥

---

१ प्रीञिति यकारोच्चारण यङ्लुग्मक्त्यर्थम्। धूञित धुवति निवृत्त्यर्थं च ॥ प्रीयते इत्यत्र 'इहल्यय्य इति इक् ॥

२ ये इति यप्रत्ययनिर्देशो न जणनिर्देश तेन सन्यादिलात न भवति केचिदत्रापि भवत्येव स्यात्। सायात् खायात् ॥

**१४०१ अस्संज्ञण्णवने** ।४।२।९७। दरिद्रातेर्ल्यस्थि प्रत्यये लुग् भवति न सादौ सनि उणे ण्वौ अनटि च ॥ दरिद्यते । शिप्यते । उश्यते । नूयते । ईयते । यायते । मीयते ॥

**१४०२ चक्षः रुशाञ् वाचि** ।४।२।९२। वाचि वर्तमानस्य चक्षः ल्यस्थि प्रत्यये रुशाञ् भवति ॥

**१४०३ शो यः** ।४।२।९४। रुशाआदेशस्य शस्य यो वा भवति॥ व्याख्यायते । चर्त्वे व्याक्शायते । शिञ्ज्यते ॥ अथ ह्रादिः । हीयते । मीयते । भ्रियते ॥

अथ दिवादि' । विद्यते । जीर्यते । सायते । दीयते । दीर्घः जायते । जन्यते । नलुक् । रज्यते । स्तृन् आच्छदने । स्तीर्यते ॥

अथ ऋचादिः । पूर्यते । जीयते । ज्ञायते । वध्यते ॥ अथ तुदादिः । भृज्ज्यते विलिप्यते । क्षि निवासगत्यो । क्षीयते । क्रियते । गीर्यते । आद्रियते । पृच्छ्यते । वृश्च्यते । इप्यते । गूर्यते । व्याभियते । स्वज्यते ॥ अथ तनादिः । सायते । सन्यते । अथ रुधादिः । रुध्यते । भिद्यते ॥ छिद्यते ॥ अथ चुरादिः । कथ्यते मृग्यते ॥ अथ युजादिः ॥ धून्यते प्रीण्यते ॥ इति भावकर्मप्रकरणं समाप्तं ॥

लिङि गोपाय्यात् गोपाय्यास्ताम् इत्यादि । गुप्यात् गुप्यास्तामित्यादि । कामयिपीष्ट कमिपीष्ट । ऋतियिपीष्ट ऋत्यात् । चिकित्स्यात् । तितिक्षिपीष्ट । जुगुप्सिसीष्ट । शीशासिसीष्ट शीशांस्यात् । मुदि हर्षे । इट्यसादित्वादाकित्त्वेन एङ् । मोदिपीष्ट । हदि पुरीपोत्सर्गे । अक्षुन्विति नेट् हत्सीष्ट । त्रपौपि लज्जायाम् । औदित्त्वाद्वेद् । त्रपिपीष्ट त्रप्सीष्ट । क्षमौपि सहने । क्षमिपीष्ट क्षंसीष्ट ॥ ऊहि तर्के ॥

१ सन सादिविशेषण किं[१] दिदरिद्रिपति। इदमेव ज्ञापक दरिद सनो विकल्पेनेडिति।

२ घार्चाति किं[२] चष्टे विचक्षण अत्र योद्धव्ये। सचक्ष्या. अत्र वर्जने ॥ वृचशाः राक्षस अत्र हिंसायाम् ॥ स्पृशांगिनि नकारो नित्यात्मनेपदनिवृत्त्यर्थं ॥

**१४०४ उपसर्गादुदूहः** ।४।२।५। उपसर्गादूहेरिक् क्ङिति यादौ प्रत्यये उद्भवति ॥ अभ्युह्यात् अभ्यूहिषीष्ट । गाहौङ् विलोडने । औदित्वाद्वेद् । गाहिषीष्ट । इडभावे दत्वादि घाक्षीष्ट । स्मिङ् ईषद्धसने । अजन्तत्वान्नेट् । स्मेषीष्ट । श्यैङ् गतौ । एचोऽश्या इत्यात् श्यासीष्ट ॥ धृङ् अविध्वसने । उरिति किद्वत्वान्नार् । धृषीष्ट । पूङ् पवने । अचिश्रीतीड् निषेधाभावादिट् । पविषीष्ट । डीङ् विहायसा गतौ डयिषीष्ट । स्रन्सूङ् भ्रन्सूङ् अवस्रंसने । लिङ्यङित्त्वान्न न्लुक् । स्रंसिषीष्ट भ्रंसिषीष्ट ॥ स्यन्दौङ् स्रवणे । स्यन्दिषीष्ट स्यन्सीष्ट । कृपौङ् सामर्थ्ये । कल्पिषीष्ट । क्लृप्सीष्ट ॥ स्मृ आध्याने । यङ्चक्येऽर् स्मर्यात् ॥ दृ भये । इर् । दीर्यात् ॥ श्रा पाके ॥

**१४०५ हल्भ्यां लिङ्चेद्धा** ।४।२।८५। धातोर्हल्द्वयादात क्ङिति लिङि एद्वा भवति ॥ श्रायात् श्रेयात् । रमि क्रीडायां ॥

**१४०६ रयनमान्मः** ।४।२।१८४। रादिपूर्वान्मान्तादेवाचो धातोर्वलादेरिड् न भवति ॥ रंसीष्ट । बुधी बोधने । बुध्यात् । बन्नासेति नेट् । भुत्सीष्ट ॥ धृ स्थैर्ये च रि ध्रियात् ॥ जि ज्रि अभिभवे । दीर्घं । जीयात् ॥ धेट् पा पाने । आत्वे । घुत्वादेत् । धेयात् पेयात् ॥ हल्द्वयात् परत्वाद्वेत् । घ्रायात् घ्रेयात् । ध्मायात् ध्मेयात् । घुमेति नित्यमेत् पत्वानि वृत्तौ घुत्वनिवृत्ति स्थेयात् म्नायात् म्नेयात् देयात् । दैव् शोधने । आत्वम् अघुत्वान्नैत् । दायात् ॥ ग्लायात् ग्लेयात् । म्लायात् म्लेयात् ॥ द्रै स्वप्ने । द्रायात् द्रेयात् । कै गै रै शब्दे । गेयात् ॥ ऋ प्रापणे च । यङ्चक्यारश्च इत्यर् । अर्यात् ऋम्यात् ॥

**१४०७ क्रमः** ।४।२।१७४। क्रमस्तङानयोर्वलादेरिड् न भवति ॥ क्रंसीष्ट । गम्यात् ॥

**१४०८ गमः** ।४।२।७०। गमस्सादेर्वलादेरिड् वा भवति ॥

---

1 उपसर्गादिति कि? ऊह्यते । ऊह इति कि? समीह्य ऋदितीति कि? समूह्य अभ्यूह्यार्थे । इक इति कि? आ उह्यते ओह्यते समोह्यते । समीहने ॥

**१४०९ गंस्लोरेसुपतङाने** ।४।२।१७३। गमस्तुभ्यां परस्य वलादेरसुबुधातुसम्बन्धिनोस्तङानयोरिड् न भवति ॥ सम्पूर्वत्वे । सङ्गंसीष्ट ॥

**१४१० गमो वा** ।४।१।१६४। गमस्ताङि सादौ मिलौ किद्वद्वा भवति ॥ हन्मन्येति मलुक्, सङ्गसीष्ट। इश्यात्। दश्यात्। टु ओ श्वि गतिवृद्ध्योः श्व्यादीतीक्। शूयात् ॥ वस निवासे उष्यात्। वद व्यक्तायां वाचि उद्यात्। यजी देवपूजासङ्गतकरणदानेषु। इज्यात् भ्रस्मस्तिति नेट्। यक्षीष्ट ॥ टुवपी बीजसन्ताने। उप्यात् ॥

**१४११ ओवलिलुक्षिलुसस्यतिशताल् पः** ।१।२।१८२। आवादिपूर्वात् पान्तादेकाचो धातोर्वलादेरिड् न भवति ॥ वप्सीष्ट। वही प्रापणे उह्यात्। वनेति नेट् ढत्वादि वक्षीष्ट ॥ वेञ् तन्तुसन्ताने ऊयात् वासीष्ट। व्येञ् संवरणे वीयात् व्यासीष्ट। ह्वेञ् स्पर्धशब्दयोः हूयात् ह्वासीष्ट। भजी सेवायाम् भज्यात् भक्षीष्ट। रज्यात् ॥

**१४१२ रभसँस्थान् ञ्जः** ।४।२।१७९। रादिपूर्वाञ्जान्तादेकाचो धातोर्वलादेरिड् भवति ॥ रङ्क्षीष्ट। शपी आक्रोशे शप्यात् शप्सीष्ट। गुहौञ् संवरणे गुह्यात् गूहिषीष्ट घुक्षीष्ट। श्रिञ् सेवायां श्रीयात् श्रयिषीष्ट। नीयात् नेषीष्ट ॥

अथ अदादि. ॥ वियात् ॥

**१४१३ लिङि च** ।४।२।१२३। हनो लुङि लिङि च वधो भवति ॥ वध्यात् ॥ अधिश्रीतीन्द्। आनधिषीष्ट। अस्तेर्भूः। भूयात्। मृज्यात्।

---

१ अनुपधातौ सम्बन्धिनि तङाने सति। अनुपूर्वतङान इति किं? सञ्जिगमिषिता। अधिजिगमिषिता। प्रस्नविषु प्रस्नवितव्यम्। अनुग्रहण किं? जिगमिषिनियते प्रस्नविनियते॥ अनुग्रहणात्तङानपरपरत्वेऽपि तङानभावमात्रे प्रतिषेध। सङ्गंसीष्ट॥

२ आप्लृ व्याप्तौ। टुवपी बीजसन्ताने। लिपि उपदेहे। डुप्लुन् छेदने। क्षिप प्रेरणे। छुप स्पर्शने। सृप्लृ गतौ। ञिष्वप् शये। तिपृ रक्षणे। शपि आक्रोशे। तपि दाहे॥

३ रञ्जी रागे। भञ्जो अवमर्दने। षञ्ज सङ्गे। ष्वञ्ज परिष्वङ्गे।

उच्यात् । रुच्यात् । सुप्यात् । अन्यात् श्वस्यात् । जक्ष्यात् । जागुः क्ङितीत्यर् जागर्यात् । अस्सन्तुण्वन इत्यातो लुक् दरियात् । चकास्यात् । शिष्यात् । उद्यात् । रूयात् । अधिश्रीतीट् सक्षणविषीष्ट । स्नूयात् । ईयात् । सम्पूर्वत्वे ॥

१४१४ स्येतोरित् ।४।२।६। उपसर्गादिण क्ङिति यादौ लादेशे इद् भवति ॥ दीर्घापवादः समियात् । पा रक्षणे पायात् । मा माने मेयात् । स्यासीष्ट । चाक्षिषीष्ट । ईशिषीष्ट । षूङ् प्राणिगर्भविमोचने सोषीष्ट । सविषीष्ट । अध्येषीष्ट । ह्निप्यात् ॥

१४१५ शिशुद्वित्विकृषिचितुदोः पः ।४।२।१८६। स्यादि पूर्वात् पान्तादेकाचो धातोर्वलादेरिड् न भवति ॥ ह्निक्षीष्ट । दुही प्रपूरणे दुह्यात् धुक्षीष्ट । लिह्यात् लिक्षीष्ट । ऊर्णुञ् आच्छादने । अनेकाच्त्वादिट् ॥

१४१६ वोर्णोः ।४।१।१४६। ऊर्णोतेरिडादौ ङिद्वद् वा भवति ॥ उव् ऊर्णुविषीष्ट । ऊर्णविषीष्ट । अथ ह्वादि ॥ अर्यात् । हेयात् । निज्यात् । अस्मस्त्विति नेद् । निक्षीष्ट । विष्यात् । शिशुद्वीति नेद विक्षीष्ट ॥ अथ दिवादि ॥ व्यध ताडने वशि व्यचीति यज इक् । विध्यात् । सेयात् । देयात् । जनिषीष्ट ॥ पदि गतौ । अक्षुन्विति नेद् । पत्सीष्ट ॥ विदि सत्तायां । शक्ल्मच्छीति नेद् । वित्सीष्ट ॥ खिदि दैन्ये । खित्सीष्ट ॥ युधि सम्प्रहारे । वन्नासेति नेद् युत्सीष्ट ॥ बुधि मनि ज्ञाने । भुत्सीष्ट ॥

१४१७ स्विद्यन्सिधिक्लिपिपुषः श्यात् ।४।२।१८८। स्वि दादिभ्य श्यविकरणेभ्यो वलादेरिड् न भवति ॥ मसीष्ट ॥ डीङ् गतौ । डयिषीष्ट ॥ अथ स्वादि ॥ स्तृञ् आच्छादने । यङ्चक्र्यारश्शे इत्यर् । स्तर्यात् । हरम्या चोरिति वेट् स्तरिषीष्ट स्तृषीष्ट ॥ क्रियात् कृषीष्ट ॥ वृञ्

१ शिष विशेषणे । शुष शोषणे । ह्रिषि अप्रीतौ । त्विषि दीप्तौ । कृश विलेखने । पिष्लृ सञ्चूर्णने । विषॢ व्याप्तौ । तुष प्रीतौ । दुष वैकृत्ये ॥ लिह्य लिहि आस्वादने ॥

वरणे । नियात् वृषीष्ट वरिषीष्ट ॥ धूञ् कम्पने । धूयात् । रधादीनि वेट् धविषीष्ट धोषीष्ट ॥ अथ क्र्यादिः ॥ पूङ् पवने । पूयात् अधिश्रीतीट् पविषीष्ट ॥ स्तॄञ् च्छादने । स्तीर्यात् । हल्म्यां चोरिति वेट् स्तरिषीष्ट । इडभावे उरिति किद्वत्त्वादिर् स्तीर्षीष्ट ॥ वृञ् वरणे । नियात् वरिषीष्ट वूर्षीष्ट ॥ ज्या वयोहानौ । इङ् । जीयात् । शायात् ज्ञेयात् ॥ अथ तुदादिः ॥ दिशी अतिसर्जने । दिश्यात् ॥

**१४१८ दन्दलिचिस्पृमृदिरुकुरेः शः** ।४।२।१८५। दनादिपूर्वात् शान्तात् एकाचो धातोर्वलादेरिड् न भवति ॥ दिक्षीष्ट वशिव्यचीतीङ्। भृज्यात् भ्रस्मलितिति नेट् । भ्रक्षीष्ट ॥ प्रच्छ ज्ञीप्सायाम् । इङ् पृच्छयात् शकुप्रच्छीति नेट् पृक्षीष्ट ॥ विश प्रवेशने । विश्यात् । निपूर्वत्वे दन्दलीडिड् न भवति । निविक्षीष्ट । वृश्च्यात् । व्यच व्याजीकरणे । इङ् । विच्यात् । कुङ् कूङ् शब्दे ॥

**१४१९ गाङ्कुटादिभ्योऽञ्णिन्ङित्** ।४।१।१४४। गाङादेशस्य कुटादीनां च अञ्णिति प्रत्यये ङिद्वद् भवति ॥ कुषीष्ट इट्युर् कुविषीष्ट ॥ गुरैङ् उद्यमने । गुरिषीष्ट ॥ ओविजैङ् भयचलनयो. । विजिषीष्ट ॥ रभि राभस्ये ॥

**१४२० यरलाद् भः** ।४।२।१८३। यादिपूर्वाद् भान्तादेकाचो धातोर्वलादेरिड् न भवति ॥ रप्सीष्ट ॥ डुलभिष् प्राप्तौ । लप्सीष्ट ॥ अथ तनादिः ॥ क्षणिषीष्ट ॥ अथ रुधादिः । विदि विचारणे । शकुप्रच्छीति नेट् । वित्सीष्ट ॥ अथ चुरादि. । स्फोत्र्यात् युपीष्ट ॥ अथ युजादि. । मृषी तितिक्षायां । मृष्यात् मर्षिपीष्ट ॥ तपी दाहे । तप्यात् तप्सीष्ट ॥ धूञ् कम्पने ।

---

१ गाङिति इकारः ङि? के गै रै शब्दे पाता । अनभिज्ञानाख्यान्यानादेशादङार स्यानन्यार्थत्वादच इत्यधिकाराद्वा न गाङ् गताविलस्य ग्रहण (तस्यापि ग्रहणमित्येके) किन्तु 'लुङ्लृङोौ सन्ङ वा' इति सूत्रेण इङ् अध्ययने इत्यस्य धातो. गादेशस्य ॥

२ यभ जभ मैथुने । रभि राभस्ये । डुलभिष् प्राप्तौ ॥

धून्यात् णिजभावपक्षे धूयात । रधादीति वेट् धविषीष्ट धोषीष्ट ॥ प्रीञ् तर्पणे । प्रीण्यात् प्रीयात् प्रेषीष्ट ॥

लिटि । स्पर्धि सङ्घर्षे । द्विः ॥

**१४२१ लुक् खयि** ।४।१।८१। द्विर्भावे पूर्वस्य खयि परे पूर्वहलो लुग् भवति ॥ शेषं प्राग्वत् । पस्पर्द्धे ॥ बाधृङ् लोटने । बबाधे ॥ अझटिति नैत् दददे । जहदे ॥ ष्वदि ष्वर्दि स्वादि आस्वादने । नैत् । सस्वदे ॥ अकुङ् लक्षणे । उदित इति नम् नङ् आनङ्के ॥ ऋजि गतिस्थानार्जनोर्जनेषु । आनृजे ॥ त्रपौषि लज्जायां । त्रप्फलीत्येत् त्रेपे । पनायाञ्चकार पेने । पणायाञ्चकार पेणे । कामयाञ्चक्रे चकमे ॥ अयि गतौ । अयाञ्चक्रे ॥ दयि दानगतिहिंसादानरक्षणेषु दयाञ्चक्रे । ऊयाचक्रे । ईक्षि दर्शने । ईक्षाचक्रे ॥ कासृङ् शब्दकुत्सायां कासांचक्रे ॥ देङ् रक्षणे ॥

**१४२२ देर्लिटीगिः** ।४।१।६९। देङोऽचो लिटि इगिर्भवति न च द्विः ॥ दिग्ये दिग्याते दिग्यिरे ॥ स्नसूङ् प्रमादे । असंयोगादित्यकित्वान्न न्लुक् सस्रसे ॥ द्युति दीप्तौ ॥

**१४२३ द्युतेरिः** ।४।१।७८। द्युतेर्द्विर्भावे पूर्वस्योत. इद् भवति ॥ दिद्युते ॥ व्यथिष् भयचलनयोः । भूत्र्यर्थेति इत् विव्यथे ॥ नट अवस्पन्दने । ननाट । त्रप्फलीत्येत् । नेटतुः नेटुः इत्यादि ॥

**१४२४ हल्भ्यामृदन्तेः** ।४।२।१३। हल्द्वयादृदन्तस्य अर्तेश्च लिट्यर्भवति ॥ सस्मार सस्मरतुः सस्मरु. । सस्मरिथ सस्मर्थ इत्यादि ॥ श्रा पाके । शश्रौ शश्रतुः शश्रु. । नित्यानिट्तास इति वेट् शश्राथ शश्रिथेत्यादि ॥ फण गतौ ॥

**१४२५ फणादिजॄत्रसभ्रम्वमां वा** ।४।१।६४। फणादेर्जादेश्चाच एद्वा भवति इडादावपीति च लिटि परे न च द्विः ॥ पफाण फेणतुः पफणतुः फेणुः पफणुरित्यादि । स्वन शब्दे । सस्वान स्वेनतुः सस्वनतु ॥

---

१ ऋतो हल्भ्यामिति विशेषणात् अर्तिग्रहण तकारेत्तद्निर्देशश्चोत्तरार्थं ॥

राजृ दीप्तौ रराज रेजतु रराजतु । रेजे रराजे रेजाते रराजाते । भ्राजि दीप्तौ । भ्रेजे बभ्राजे इति फणादि ॥ टुवमू उद्गरणे । फणादीति वैत् । ववाम वेमतु ववमतु ॥

१४२६ जेर्लिट्सनि ।४।१।७२। जेर्लिट्सनो द्विर्भावे पूर्वात्परस्य जस्य गुर्भवति ॥ जिगाय जिग्यतु जिग्यु । विजिग्ये ॥ धेट आत्यौग् । दधौ दधतु दधु । पपौ । हल्भ्यामित्यर आर आरतु आरु ॥ तृ प्लवनतरणयो ॥ त्रप्फलीत्येत् । ततार तेरतु ॥ ऋतीयाचक्रे । आनर्त्त आनृततु आनृतु ॥ चिकित्साचकार चिकेत ॥ असयोगादित्यकित्वान्न नुलुक् । ससञ्ज ससञ्जतु ससञ्जु । अत्वत्वाद्वेट् । ससङ्क्थ ससञ्जिथ ॥ गोपायाचकार जुगोप । धूपायाञ्चकार दुधूप ॥ जगाम । अपिति गहन्नित्यतो लुक् । जग्मतु जग्मु । नित्यानिडिति वेट् जगमिथ जगन्थ जग्मथु जग्म । जगाम जगम जग्मिव जग्मिम ॥ सञ्जग्मे सञ्जग्माते सञ्जग्मिरे ॥ बभ्राम फणादीति वैत् भ्रेमतु बभ्रमतु भ्रेमु । ईर्ष्याचकार । दल त्रिफला विशरणे । ददाल देलतु ॥ त्रप्फलीत्येत् पफाल फेलतु । शसु हिंसायाम् । अशटिति नैत् शशास शशसतु ॥ उषू दाहे । उष् उवोष ऊषतुः

१४२७ जाग्रुपसमिन्धोवा ।१।४।८४। जाग्रादिभ्यो लिट आम् वा भवति कृभ्वस्लिट् चानुप्रयुज्यते ॥ ओषाञ्चकार ओषाम्बभूव ओषामास ॥ ददर्श ददृशतु ददृशुः । थे नित्यानिडिति वेट् ॥

१४२८ सृजिदृशोऽम् जल्याकि ।४।२।९४। सृजिदृशोरमिति जल्यम् भवति ॥ म इत् यत्र् । दद्रष्ठ । ददर्शिथ ददृशथु ददृश । ददर्श ददृशिव ददृशिम ॥ संददृशे ॥ अर्ह पूजायाम् । आनर्ह ॥ टु ओश्वि गतिवृद्ध्यो ॥

---

१ जागृ निद्राक्षये उषू दाहे । सम्पूर्व ञिइन्धि दीप्तौ । सम् महण कि? इन्धयते । केचिदिन्धिरुपसर्गमाद्रगलभूत इत्याहु । तेषा सम्महणमुपसर्गोपलक्षणार्थं दृष्टव्यम् ॥

**१४२९ लिंट्यङि** ।४।१।१२४। श्वेर्लिटि यङि च साचो यन इग्वा भवति ॥ शुशाव शुशुवतुः शुशुवुः । सेट्त्वात्त्वादिट् शुशविथ । इगभावे ॥

**१४३० न** ।४।१।१२५। श्वेर्लिड्यङोः परतो द्विर्भावे पूर्वस्य साचो यन इग् न भवति ॥ शिश्वाय शिश्वियतुः शिश्वियुः । शिश्वयिथ ॥ इग्यज इतीक् । उवास । इकि दीर्घः ऊषतुः ऊषुः । शकृभृच्छीत्यनिट्त्वात् वेट् । उवसिथ उवस्थ ॥ उवाद ऊदतुः ऊदुः । उवदिथ ॥ इयाज ईजतुः ईजुः इयजिथ । इयष्ठ । ईजे ॥ उवाप ऊपतुः ऊपुः । उवपिथ उवप्थ । ऊपे ऊपाते ॥ उवाह ऊहतुः ऊहुः । उवहिथ । इडभावे । ढत्वधत्वादि ॥

**१४३१ सहिवहोऽस्यौः** ।१।१।८१। सहिवहोर्ढ्लुकि पूर्वस्यात ओद् भवति ॥ उवोढ । ऊहे ऊहाते ॥

**१४३२ वेर्वय्** ।४।२।१२१। वेञो लिटि वय् वा भवति ॥

**१४३३ न वः** ।४।१।१०९। वेञादेशस्य वयो यत्रः लिटि परे इगादेशो न भवति ॥

**१४३४ वा** ।४।१।११०। वेञादेशस्य वयो यत्र इग्वा न भवति ॥ पक्षे येन सहेक् उव् । उवाय ऊयतुः ऊयुः । ऊवतुः ऊवुः । उवयिथ ॥

**१४३५ प्ये च** ।४।१।१११। वेञः प्ये लिटि च इग् न भवति ॥ आत् । ववौ ववतुः । ऊये ऊयाते । ऊवे ऊवाते । ववे ववाते ॥

**१४३६ व्योऽलिटि** ।४।१।११८। व्येञ एच अदि आद्भवति न लिटि ॥ विव्याय । ऋव्यादीतीट् । विव्यतुः विव्युः । अवृव्यात्तेरितीट् । विव्ययिथ । विव्ये विव्याते । ह्वेञ् स्पर्धायाम् ॥

**१४३७ व्यक्तौ ह्वः** ।४।१।१२१। द्विरुक्तनिमित्ते प्रत्यये ह्वेञः साचो यन इग् भवति ॥ जुहाव जुहुवतुः जुहुवुः । जुहविथ जुहोथ ।

---

१ 'इग्यमः साचोऽर्थोऽव्यम्' इत्यस्यापवादः । विद्व्यः पिति साचवारा इति अपिति परत्वात्किद्वद्भावे न नित्यमेनेक् स्यात् पूर्वस्येति प्रतिषेधात् आस्यवीति पि स्यादिति पूर्वमिग्मेव यत्र इग्भवति पश्चाद्वृद्धिः ॥

जुहुवे जुहुवोत ॥ भजी सेवायां । बभाज । त्रप्फलीत्येत् भेजतुः । भेजे । संयोगान्तत्वादकित्त्वेन न लुक् । ररञ्ज ररञ्जे । जघान । गंहन्नित्यतो लुक् । जघ्नतु. जघ्नुः । जघनिथ । जघ्ने । दीदांसांचकार दीदांसांचक्रे । शीशांसांचकार शीशांसाचक्रे । गुहौन् संवरणे । औदित् । जुगूह जुगुहतुः जुगुहुः । जुगुहे । शिश्राय शिश्रियतुः । शिश्रिये शिश्रियाते । भत्ययेऽनुपर्णाण इति यञ् । निनाय निन्यतुः निन्ये ॥ अथ अदादिः ॥ निवेद ॥

१४३८ विदाव् कित् ।१।४।८६। वेवेर्लिटः किद्वदाम् वा भवति कृभ्यम्लिट् चानुमयुज्यते ॥ विदात् किद्वचनादामि स्थानित्वेन लिट्कार्यं द्विर्वचनादि न भवति । विदाञ्चकार ॥

१४३९ हिमेोऽङे कुः पूर्वान् ।४।१।७१। हिमोर्द्विर्माने पूर्वस्मात् परस्य कुर्भवति न ङे ॥ जघान । गंहन्नित्यतो लुह् । जग्नतुः जघ्नुः । जघनिथ जघन्थ । आजघ्ने ॥ अस्तेर्भूरादेशः । बभूव बभूवतुः । ममार्ज ममार्जतुः ममृजतुः ममार्जुः ममृजुः । ममार्जिथ ॥ रुद्यादीतीड् । उवान ऊचतुः ऊचुः । उवचिथ उवक्थ ॥रुरोद सुष्वाप । इड् सुषुपतुः सुषुपुः । सुष्वपिथ सुष्वप्थ ॥ आन अनतुः । शश्वास शश्वसतुः । जजक्ष जजक्षतुः । जजागार जजागरतुः जजागरुः । जजागरिथ ॥ जागुपसर्गिभ्यो वा इति वाऽम् । जागरांचकार । दरिद्रांचकार । चकासांचकार ॥ शशास शशासतुः शशासुः । शशासिथ ॥ उवास । वशीतीह ।

१ विदाम्बभूव । विदामास । आम्येह् माशोति इति दिद्वचनम् ॥ विदाम्किदिति वचनात्पूर्वयोगयोर्विभागायामि स्थानिवद्भावेन लिड्ग्रये किद्भावश्च न भवति ॥ अकार-निर्देशः अदार्थं ॥

२ ङवर्जिते प्रत्यये परतो यो हि हन् इत्येतौ धातू तयोर्द्विर्माने पूर्वस्मात्परयोरादेः कुः कवर्गादेशो भवति ॥ अङे इति किं प्राजीहयन् । आदि द्विर्वचननिमित्ते प्रत्ययेऽनन्तरस्य विज्ञानादिह न भवति हननियतुमिच्छति जिघनियिषति । ङपर्युदासात्कुत्वं व्यवधाने भवति प्रजिघायिषति । पूर्वादिति किं परस्य यथा स्यात्तस्मादेरिति आदेर्भवति ॥ "यङ्श्च श्वेऽङ्डे चाङ.।१।४।८१" आद्युत्पर्वमेदन्नेथ लसदो भवन्ति ॥ सावधे ॥

ऊशतु ऊशुः । उवशिथ ॥ सञ्चुक्षुवे सञ्चुक्षुवाते ॥ सुस्राव सुस्रुवतु ॥ नुनाव नुनुवतु । इय् । इयाय ईयतु ईयुः । इययिथ इयेथ । इयाय ॥ वी गतिप्रजनकान्त्यसनखादनेषु ॥ विवाय विव्यतु । ययौ ॥

१४४० लिटि वा ।४।२।१२०। चक्षो लिटि ख्शाञ् वा भवति ॥ चख्ये । चचक्षे । ईराञ्चक्रे । ईडाञ्चक्रे । आसाञ्चक्रे । वसि आच्छादने । ववसे । आङः शसुङ् इच्छायाम् । आशशासे । पूङौ प्राणिगर्भविमोचने । सुषुवे । इङ् अध्ययने ॥

१४४१ गाङ् लिटि ।४।२।१२७। इङो लिटि गाङ् भवति ॥ ङित् । अधिजगे । अनृच्छूर्णोरिति नाम् । ऊर्णुनाव ऊर्णुनुवतु । ऊर्णुनुवे ॥ तुष्टाव तुष्टुवतु तुष्टुवुः । स्वादित्वान्नेट् । तुष्टोथ तुष्टुवे ॥ अथ ह्वादि ॥ श्रीह्रीति वा श्लुवत् । आम् । विदात् किदिति नियमादन्येभ्योऽकित्त्वादेङ्र । बिभयाञ्चकार बिभाय ॥ ह्री लज्जायाम् । जिह्रयाञ्चकार जिह्राय । पपार । आर । जहौ । ममे । बिभराञ्चकार । बिभराञ्चक्रे । बभार । स्वादित्वान्नेट् बभर्थ । बभ्रे ॥ डुदाञ् दाने । ददौ ददे ॥ अथ दिवादि । त्रसै उद्वेजने । फणादीति वैत् । तत्रास तत्रसतु, त्रेसतु ॥ राध वृद्धावेव ॥

१४४२ लिटीडप्येत् ।४।१।६२। वधार्थे राधोऽच इडादावपिति च लिटि एद्भवति न च द्वि ॥ अपरराध अपरेधतु अपरेधुः । अपरेधिथ ॥ अन्यत्र आरराध अरराधतु ॥ विव्याध । वशीतीत् । विविधतु ॥ उच समवाये । पित्युव् । उवोच । दीर्घ ऊचतु ॥ रध हिंसासंराध्योः ॥

१४४३ रधः ।४।२।२००। रधोऽजादौ प्रत्यये नम् भवति ॥ ररन्ध ररन्धतु इत्यादि । जजार । स्कृच्छ्रृत इत्यर् । फणादीति वैत् । जेरतु जजरतु ॥ शशौ । गहभित्यतो लुक् श्चुत्व । जज्ञे । पेदे ॥ प्रीङ् प्रीतौ । अतत्सयोगादिति यञ्भावे इय् । पिप्रिये ॥ अथ स्वादि ।

१ ऊर्णुनाव 'नबन्द्रा वर्णीति' रेफ मुक्त्वा तत इति सूत्रेण परोऽचो द्विर्भवति ॥

स्तृञ् च्छादने। हल्भ्यामित्यट्। तस्तार तस्तरतुः। तस्तरे॥ वृञ् वरणे। ववार ववतुः ववुः। वव्रे॥ धूञ् कम्पने। दुधाव दुधुवतुः दुधुवुः। रधादीति विकल्पितेट्त्वात् थे नित्यमिट् दुधविथ दुधुवे॥ शुश्राव शुश्रुवतुः शुश्रुवुः। स्वादित्वान्नेट् शुश्रोथ॥ हि गतिवृद्ध्योः। हिनोरिति हस्य घः प्रजिघाय॥ दन्भू दम्भे। ददम्भ॥

१४४४ दन्भः।४।१।६६। दन्भः अपिति लिट्यच एद्भवति न च द्विः न्लुक् च॥ देभतुः देभुः॥

१४४५ थेपा।४।१।६७ दन्भस्थे लिटोद्वा भवति न च द्विः न्लुक् च॥ देभिथ ददम्भिथ॥ अथ भचादिः तस्तार। स्कृच्छ्रृत इत्यट्। तस्तरतुः तस्तरुः। सेट्त्वान्नित्यमिट् तस्तरिथ। तस्तरे॥ चकार चकरतुः। चकरे॥ शॄ हिंसायां। शशार॥

१४४६ शृद्दृप्रां लिटयृ वा।४।२।११। श्रादीनां लिटि ऋद्वा भवति॥ पक्षे अर्। शश्रतुः शशरतुः॥ पॄ पालनपूरणयोः। पपार पपरतुः पप्रतुः॥ भॄ भरणे बभार बभरतुः बभ्रुः। बभरिथ॥ दॄ भये। ददार दद्रतुः ददरतुः॥ ऋ गतौ। आर आरतुः आरुः॥ जिज्यौ। वशि व्यचीतीर् जिज्यतुः। जज्ञौ जज्ञतुः जज्ञुः॥ श्रन्थ विमोचनप्रतिहर्षणयोः। शश्रन्थ॥

१४४७ श्रन्थग्रन्थो न्लुक् च।४।१।६५। अनयोरिडादावपिति च लिटोद्वा भवति न च द्विः न्लुक् च॥ श्रेथतुः शश्रन्थतुः। ग्रन्थ सन्दर्भे। जग्रन्थ ग्रेथतुः जग्रन्थतुः॥ अथ तुदादिः॥

१४४८ भ्रस्जस्रोऽर्।४।२।९५। भ्रस्जोरसः अर्वा भवति ल्याश्चि परतः॥ बभर्ज॥ बभर्जतुः। असंयोगादित्यकित्त्वान्नेट्। बभ्रज्ज बभ्रज्जतुः। बभर्जे बभ्रज्जे॥ उज्झ उत्सर्गे। उज्झाञ्चकार॥ एडि इष् इयेष दीर्घः ईषतुः॥ व्यच व्याजीकरणे। विव्याच वशीतीर् विविचतुः॥

१४४९ स्वञ्जेर्वा।४।१।१४९। स्वञ्जेर्लिटि किद्वद् भवति वा॥ सस्वजे॥ अथ रुधादिः॥ ञि इन्धैद् दीप्तौ। ङिद्त्वान्नलुक्। ईधे

ईर्घाते । सम्पूर्वत्वे जागृवेति वाम् । समिन्धांचक्रे ॥ अनूज गतिव्यक्ति-म्रक्षणेषु आनञ्ज आनञ्जतुः ॥ णिजन्तानामाम् । प्राग्वत् प्रक्रिया । लुण्ट-यांचकार इत्यादि सर्वं योज्यम् ॥

लुडि अस्पर्धिष्ट । अपनायीत् । अपनिष्ट । अपणायीत् अपाणिष्ट । औदित्त्वाद्वेद् अक्षमिष्ट । अक्षंस्त । कंश्रीति ङः द्वित्वादि अचकमत ॥ ओप्यायैङ् वृद्धौ ॥

**१४५० दीप्पूर्जन्बुधतायप्यायस्ते ञिः** ।४।३।१५। दीपादि-भ्यः कर्तरि लुडि ते परे ञिर्वा भवति ॥ ञ इत् । ञेरिति तस्य लुक् पक्षे सिः । अप्यायि अप्यायिष्ट अप्यायिषातां ॥ तायृञ् सन्तानपालन-योः वा ञिः । अतायि अतायिष्ट ॥ औदित्त्वाद्वेद् अगाढ अघाक्षाताम् अगाहिष्ट अगाहिषातां । शकमच्छीति नेट् अस्नेष्ट । अतङि सर्तीयङ् अद्युतत् अद्योतिष्ट । अशुभत् अशोभिष्ट । अरुचत् अरोचिष्ट अश्वितत् अश्वेतिष्ट । अमिदत् अमेदिष्ट । अस्विदत् अस्वेदिष्ट । अघुटत् अघो-टिष्ट । अलुटत् अलोटिष्ट । अलुठत् अलोठिष्ट । अक्षुभत् अक्षोभिष्ट । अस्रभत् अस्रम्भिष्ट । अस्रसत् अस्रंसिष्ट । अभ्रशत् अभ्रंशिष्ट । अध्व-सत् अध्वंसिष्ट । अवृतत् अवर्तिष्ट । अवृधत् अवर्धिष्ट । अशृधत् अशर्धिष्ट । अस्यदत् अस्यन्दिष्ट । अकृपत् अकल्पिष्ट ॥ ज्वर रोगे ॥

**१४५१ वद्व्रज्लोऽस्तः** ।४।२।६८। वद्व्रजोर्लरान्तस्य च धातोरतः अतङानपरे सौ आद्भवति ॥ अज्वारीत् । नट नृत्तौ ॥

**१४५२ वोर्णुव्हलादेर्लघोरिटि** ।४।२।६९। ऊर्णुनः हलादेर्ह-लन्तस्य च धातोर्लघोरतः इडादावतङानपरे सौ आरैज्वा भवति ॥ अनाटीत् अनाटिष्टाम् । अनटीत् अनटिष्टां ॥ कखे हसने । न क्षणिनि नारैच् । अकखीत् ॥ ज्वल दीप्तौ वद्व्रजिति नित्यमात् अज्वालीत् ॥ पत्लृ गतौ । आदि

१ वद् व्रन् इत्येतयोर्लकारान्तस्य रेफान्तस्य च धातोरकारस्य अतङानपरे सौ परत आकारादेशो भवति । वद्व्रज्ल्र् इति किं? मा निरदीत् । अत इति किं? न्यमीलत् । अवधीत् । वध गतौ इत्यस्मात् सेधानेर्हल्न्यन्तधानमिति न भवति ॥

श्वयत्यसिति पम् अमावितौ अपसत् ॥ शद्मच्छीति नेट् । अस्मार्षीत् ॥

१४५३ **यंरनेमातां सक् च** ।४।२।७२। यम्रम्नम्भ्यः आदन्तेभ्य· च परस्य सेरिड् भवति अतडाने परत· सक् चैतेषाम् ॥ ईटीट इति सेर्लुक् अथासीन् अश्वासिष्टाम् । अरंसीत् अरंस्त ॥ वुधिं बोधने । यन्नासेति नेट् ऐच् । अभौत्सीत् अबौद्धां । तढि या ञिः । अबोधि अबुद्ध अभुत्सातां । न क्षणिति नारैच् अवमीत् । सर्तीत्यड् । असदत् अशदत् ॥ द्रु स्रु गतौ । कंश्रीति ङ. । अदुद्रुवत् असुस्रुवत् ॥

१४५४ **धेट्श्वेर्वा** ।४।३।८। धेट्श्विभ्यां कर्तरि लुङि ङो वा भवति ॥ ङित्त्यादिटि चातो लुक् । अदधत् अदधतां ॥

१४५५ **घ्राधेट्शाच्छासो वा** ।४।२।७४। घ्रादिभ्यस्सेरतडाने लुग्वा भवति ॥ अश्वचीट्सकौ । अधात् अधाताम् । अधासीत् अधासिष्टां ॥ घुपेति से· लुक् । अपात् अपातां ॥ घ्राधेडिति वा लुक् । अघ्रात् अघ्रासीत् । अध्मासीत् ॥ सेः लुक् । अस्थात् ॥ आत इत् । प्रास्थित प्रास्थिषाताम् । अम्रासीत् । अदात् ॥ दैव् शोधने ॥ अदासीत् ॥ सृ गतौ । सर्तीत्यङ् ॥

१४५६ **ऋदृशोऽङि** ।४।२।९। ऋवर्णान्तानां दृशेश्चेऽरु· अङ्यर्भवति ॥ असरत् । असरतां ॥

१४५७ **लिम्पिसिजूह्वार्त्तेः** ।४।३।१३। लिपादीनां कर्तरि लुङ्यतङि अङ् भवति ॥ अर् । आरत् आरतां । सेग्लान् सिलुक् अतारीत् अतारिष्टाम् । आर्तीयिष्ट आर्तीत् ॥ च्युतृ भासने ऋदित्त्वाद्वाङ् । अच्युतत्

१ लिम्पिपोश्च इत्याकारो न भवतीति विशेष । अतडान इति किं? अयंस्त अरंस्त दण्ड स्वयमेव । कर्मण्यसनादीनां कर्मवद्भावाति वचनात् कर्मकर्तरीति कर्मभावे तङ् । अमास्त धान्य ॥ बहुवचन लाक्षणिकार्थम् । अग्लासिष्टम् । अग्लासिषु ॥

२ शो तनूकरणे । छो छेदने । षो अन्तकर्मणि । धेट पूर्वेण नित्ये प्राप्ते शेषेभ्योऽप्राप्ते विकल्प ।

३ लिप् सिच् ह्वा ऋर्ति इत्येतेभ्यो धातुभ्य कर्तरि लुचि परे मध्ये अङ् प्रत्ययो भवति ॥ अलिपत । असिचत् । आह्वात् । आरत् । योगविभाग उत्तरार्थ ॥ 'आरैजायच' इत्येतावता आरत् इति सिद्धौ पुनर्वचन मा भवान् अरत् इत्यत सप्रयोजनम्

अज्योतीत् ॥ ऋदित्त्वाद्वाङ् । अस्कदत् अस्कन्दीत् ॥ व्रज गतौ । वद्व्रजि-
स्यात् । प्राव्राजीत् ॥ रभसेति नेट् । असाङ्क्षीत् असाङ्क्ताम् ॥ अगोपायीत्
अगोपीत् । अधूपायीत् अधूपीत् । लृदित्त्वादङ् । अगमत् ॥ णम प्रह्वत्वे
शब्दे । यरमितीट्सकौ । अनंसीत् अनंसीष्टाम् ॥ अयंसीत् । न क्षणिति
नारेच् । अशसीत् ॥ कृषि विलेखने ॥

१४५८ दृपादेर्वाऽ सृपः ।४।२।२। दृपादिभ्यो लुङि सिर्वा भवति
न सृपः ॥ शिशुद्दित्वीति नेट् ॥

१४५९ कृष्तृप्स्पृश्कृपिस्पृश्मृशो वा ।४।२।१९५। दृपादीनाम-
क्डिति अल्पम् वा भवति ॥ अकाक्षीत् अकार्क्षीत् ॥ पक्षे ॥

१४६० इकः शलोऽ दृशः क्सो नेट् चेत् ।४।२।४। इकः
परो यः शल् तदन्ताद्धातोर्लुङि क्सो भवति नेट् चेत् न दृश. ॥ अकृक्षत् ॥
ऋदित्त्वाद्वाङ् । पक्षे सौ मृजृदृश इत्यम् । अदर्शत् अद्राक्षीत् अद्राष्टां ॥
दह भस्मीकरणे । दादेरिति हस्य धः । अधाक्षीत् अदाग्धां ॥ सिह सेचने ।
क्सः । असिक्षत् ॥ धेट्श्व्वेति ङे अशिश्वियत् । पक्षे ॥

१४६१ स्तनभृद्रुचुग्लुचुग्लुञ्चुश्विश्रोऽङ् ।४।२।९। एतेभ्यः कर्तरि लुङ्च्वङ् वा भवति ॥ श्वयत्यसिति इतोऽन् अश्वन् । अश्वन्
पक्षे सौ न क्षणिति नारेच् । अश्वयीत् ॥ शकृपच्छीति नेट् । सन्सीति
सस्य तः । अवात्सीत् अवात्ताम् अवात्सुः ॥ यद्व्रजिस्यात् । अयात्सीत् ॥
अयाक्षीत् । अवाप्सीत् । अवप्त । अवाप्सीत् । अवप्त । अवाक्षीत् ॥ सिलुचि दकुत्वं
च अवोढ अवाक्षताम् । अवासीत् अवास्त अव्यासीत् अव्यास्त ॥ लिप्सी-
त्यङ् आतो लुक् आह्वत् ॥

१४६२ तङि वा ।४।२।१४। लिपादिभ्यः कर्तरि लुङि तङि अङ्
वा भवति ॥ पक्षे सिः आह्वत आह्वास्त । अदीदांसीत् अदीदांसिष्ट । अदी-
धामित् अदीधामिष्ट । भीत उन् अगूहीत् अगूहिष्ट । इत्यादि । श्रम । 
अघुक्षत् ॥

**१४६३ दुहदिहलिहगुहस्तङि लुवि क्सुवा** ।४।२।५५। दुहादिभ्यः क्सस्य तवर्गादौ वादौ च तङि लुवा भवति ॥ अगूढ । अधुक्षत ॥

**१४६४ क्सस्याचि** ।४।२।५४। क्सस्याजादौ लुग्भवति ॥ अधुक्षाताम् अधुक्षत । अगूढाः । अधुक्षथाः अधुक्षाथाम् अघूढ्वम् अधुक्षध्वम् । अधुक्षि अगुह्वहि अधुक्षावहि अधुक्षामहि ॥ कंश्रीति इ. । आशीश्रियत् अशिश्रियत । अनैषीत् अनेष्ट ॥ अथ अदादिः । अवेदीत् । समवित्त समवित्साता ॥ लिङि चेति वधादेशः । अल्लुक स्थानित्वादनुपान्त्यत्वे नारैच् । अनेकाच्त्वादिट् च अवधीत् ॥

**१४६५ वो वधस्तङि लुङि** ।४।२।१२२। हनस्तङि लुङि वधो वा भवति ॥ आवधिष्ट । पक्षे सि. ॥

**१४६६ हनः** ।४।२।२४५। हनस्तङि सादौ सौ किद्वद् भवति ॥ हन्मन्येति न लुक् । आहत आहसाताम् । अमृत ॥ औदित्त्वाद्वेट् अमार्जीत् अमार्क्षीत् ॥ अङि । श्वयत्यसितुम् । अवोचत ॥ ऋदित्वाद्वाङ् अरुदत् अरोदित् ॥ अस्वाप्सीत् अस्वाप्ताम् । आनीत् । अश्वसीत् अश्वासीत् । अजक्षीत् ॥ अनेकाच्त्वादिट् अजागरीत् ॥

**१४६७ लुङि लुग् दरिद्रः** ।४।२।९६। दरिद्रो लुङि लुग्वा भवति ॥ पक्षे सक् । अदरिद्रीत् अदरिद्रासीत ॥ अचकासीत् । सर्तिशास्तीत्यङ् शास इति इत् अशिषत् । वेर्णुगिति वाऽट् । अवशीत् अवाशीत् ॥ रपट्कत्वादिट् । ऐच् अरावीत् । अक्ष्णावीत् । समक्ष्णविष्ट । अस्रावीत् । अनारीत् अयावीत् ॥

**१४६८ गैत्योः** ।४।२।१२४। इणिकोर्लुङि गा भवति ॥ घुपेति सेर्लुक् । अगात् अगाताम् अगुः । अध्यगात् । सक् अयासीत् ॥ रुया प्रकथने । वक्तीत्यङ् । आतो लुक् । आख्यत् ख्शादेशे अङ् आख्यत ॥ ऐरिष्ट ।

---

१ दुहादेरिति किं? अधुक्षत । अदीक्षत । लुवीति किं? अधुक्षामहि ॥ क्सस्याचीत्यतो लुचि वर्तमानाया पुनर्वचनम् सर्वार्थम् ॥

ऐडिष्ट । ऐशिष्ट । आसिष्ट । अवसिष्ट । आशासिष्ट । असविष्ट । असोष्ट ॥

**१४६९ लुङ्लङ्णौ सनङे वा** ।४।२।१२८। इङो लुङ्लङोः सनङपरे णौ च गाङ् वा भवति ॥ गाङ्कुटामिति ङिद्वद्भावे ईहल्यघ्ये इतीत्वे अध्यगीष्ट । पक्षे ऐच् अध्यैष्ट ॥ क्सः । अद्विक्षत् । अद्विक्षत ॥ अधुक्षत् अदुग्ध अधुक्षत अधुक्षाताम् अधुक्षत । अदुग्धाः अधुक्षथाः अधुक्षाथाम् अधुग्ध्वम् अधुक्षध्वम् । अधुक्षि अदुह्वहि अधुक्षावहि अधुक्षामहि ॥ दिही उपदेहे । अधिक्षत् अदिग्ध अधिक्षत अधिक्षाताम् अधिक्षत । अदिग्धाः अधिक्षथाः अधिक्षाथाम् अधिग्ध्वम् अधिक्षध्वम् । अधिक्षि अदिह्वहि अधिक्षावहि अधिक्षामहि ॥ लिही आस्वादने । अलिक्षत् अलीढ अलिक्षत अलिक्षाताम् अलिक्षत । अलीढाः अलिक्षथाः अलिक्षाथाम् अलीढ्वम् अलिक्षध्वम् । अलिक्षि अलिह्वहि अलिक्षावहि अलिक्षामहि ॥ वैच् । प्रौर्णावीत् प्रौर्णवीत प्रौर्णुवीत । घुग्मितीट् । अस्तावीत् अस्तोष्ट ॥

अथ ह्वादिः । अभैषीत् ॥ आरत् । तङि वाङ् समारत । पक्षे सिः समार्ष्ट ॥

अथ दिवादिः । सर्वीत्यङ् । पुष पुष्टौ । अपुषत् । अक्षुपत् । अतुषत् । एवं पुष्यादयः स्निहिपर्यन्ता नेया ॥

**१४७० श्लिषः** ।४।३।५। श्लिषो लुङि क्सो भवति नेट् चेत् ॥ आश्लिक्षत् ॥

**१४७१ नानालिङ्गने** ।४।३।६। अनालिङ्गने वर्तमानात् श्लिषः लुङि क्सो न भवति ॥ अङि । उपाश्लिषत् जतु काष्ठम् ॥ असू क्षेपणे । लङ् श्वयत्यसितिं थक् । निरास्थत् निरास्थत ॥ नश अदर्शने । अङ् ॥

**१४७२ नशो वेम्** ।४।२।८। नशोऽङीम् वा भवति ॥ म इत् । अनेशत् अनशत् ॥ तृप प्रीणने । दृपादेर्वेति वा सिः । रधादित्वादिट् । दृतृपिति वाम् । अत्राप्सीत् अताप्सीत् । इटि अतर्पीत् । पक्षे अङ् अतृपत् ॥ दृप हर्षविमोहनयोः ॥ अद्राप्सीत् अदार्प्सीत् अदृपत् अदर्पीत् ॥

स्तनभूम्रुचु इति वाङ् । अङ् । अजरत् । पक्षे सि ऋदन्तत्वादिट् । अजारीत् ॥ घ्राधेडिति सेर्वा श्लुक् । अघ्रात् पक्षे सक् अघ्रासीत् ॥ एव अच्छात् अच्छासीत् असात् असासीत् । नित्य से श्लुक् । अदात् । दीप्पूरिति वा ञि ॥

**१४७३ भजन्वधोऽयरंनंगंवंकंचमः कृञ्ञौ** ।४।१।२२६। मान्तस्य जनेर्वधेश्च धातोरुपान्त्यस्यात ञ्णिति कृति औ च आन्न भवति न यमादे ॥ अजनि अजनिष्ट । एवमदीपि अदीपिष्ट । अपूरि अपूरिष्ट ॥

**१४७४ पदः** ।४।३।१६। पद कर्त्तरि लुङि ते परे ञिर्नित्य भवति ॥ उदपादि उदपत्साता । दीप्पूरिति वा ञि अबोधि अबुद्ध अभुत्साता ॥ स्विद्यतिेति नेट् अमस्त ॥ श्विश्रीतीट् । अडयिष्ट ॥ शुचृञ् पुतिभावे । ऋदित्त्वादतङ्यङ् । अशुचत् अशोचिष्ट ॥ हलामित्यात् । अराङ्क्षीत् अरङ्क ॥ अथ स्वादि । घूगितीट् । अधावीत् ॥ आप्लृ व्याप्तौ । लृदित्वादङ् आपत् एव अशकत् ॥ अथ क्र्यादि ॥

**१४७५ निष्कुपः** ।४।२।१४१। निस कुषेर्वलादेरिड्वा भवति ॥ निरकोषीत् निरकौक्षीत् । श्विश्रीतीद् अपावीत् अपविष्ट । एव अलावीत् अलविष्ट ॥ अथ तुदादि । वाट् । अभार्क्षीत् अभार्ष्टाम् । अभ्राक्षीत् अभ्राष्टाम् । अभर्ष्ट अभ्रष्ट । अभर्ड्ढ्वम् अभ्रड्ढ्वम् ॥ दृपादेरिति वा सौ वाम् । अकार्क्षीत् अक्राक्षीत् । अकृष्ट अक्रष्ट । पक्षे क्स । अकृक्षत् अकृक्षत ॥ लिम्पिसिञ्चित्यङ् अलिपत् । तङि वा इत्यङ् अलिपत । पक्षे सि अलिप्त ॥ षिची क्षरणे । असिचत् असिचत असिक्त ॥ अलुपत् अलुप्त । अविदत् अवित्त । ऋदन्तत्वादिट् अकारीत् अकारिष्टा । शक्प्रच्छीति नेट् अप्राक्षीत् ॥ सृज् विसर्गे । सृजृदृश इत्यम् । अस्राक्षीत् ॥ टुमस्जो शुद्धौ । टुशब्दोतावितौ । नेट् ॥

**१४७६ नश्मस्जसोर्नम्** ।४।२।१९६। नश. मस्जे. सस्य च

जल्यकिति नम् भवति ॥ अमाक्षीत् । अमाङ्क्षीत् अमाङ्क्तां ॥ रञ्जो भङ्गे । ओदित् । अरौक्षीत् ॥ छुप स्पृश स्पर्शने । आवलीति नेट् अच्छौप्सीत् ॥ दन्दलीति नेट् । दृपादेरिति वा सिः । दृश्तृपिति याम् अस्प्राक्षीत् अस्पार्क्षीत् अस्पृक्षत् ॥ एवं मृश आमर्शने । अम्राक्षीत् अमार्क्षीत् अमृक्षत् ॥ असदत् । औदित्त्वाद्वेट् । अप्रश्चीत् अव्राक्षीत् ॥ सेट् । इषु गत्याम् । ऐषीत् ॥ यरलाद्भ इति नेट् । अरठ्य अलठ्य ॥ अथ तनादिः ॥ क्षणूञ् हिंसायां । न क्षणिति नात् अक्षणीत् अक्षणिष्टां । थास्तयोस्सेर्वा श्रुक् । हन्मन्येति णलक् । अक्षत अक्षणिष्ट । अक्षथाः अक्षणिष्ठाः ॥अथ रुधादिः । भिदृञ् विदारणे । अक्षुन्विति नेट् । अभैत्सीत् । ऋदन्तत्वाद्वाङ् । अभिदत् अभित्त असेरिति निषेधादिट् ॥ अञ्ज गतिव्यक्तिम्रक्षणेषु आञ्जीत् आञ्जीष्टाम् ॥ अथ चुरादिः । ण्यन्तेभ्यः कर्त्रीति ङः । अल्घुपरत्वान्न दीर्घः । अलुलुण्टत् । अल्घुपरत्वादसन्वत्वे नेत् ॥ यत्रु चुर्णसंकोचने । उदित्त्वान्नम् । अययन्त्रत् । अत्रोर्णो मुस्तादिः ॥ उर्ज बलप्राणनयोः ॥ और्जिजत् । अग्लुत्यसन्वत्त्वात्सेत्वादि ॥ गण सङ्ख्याने ॥

१४७७ गेणश्चे ।४।१।१०४। गणेर्ङे द्विर्भावे पूर्वस्य ईद्वा भवति ॥ अजीगणत् अजगणत् । अग्लोपीत्वान्न ह्रस्वः ॥ पार तीर कर्मसमाप्तौ अपपारत् अतितीरत् । एवं कथादयः सर्वेऽपि नेतव्याः ॥

लुटि स्पार्दिता ॥ मोदिता । तितिक्षिता । तेजिता । सहा प्रविता । मीमांसिता पनायिता पनिता । पणायिता पणिता । क्षन्ता क्षमिता । गाढा गाहिता । स्नेता । गुङ् शब्दे । गोता ॥ गाङ् स्तैङ् गतौ ।

---

१ गणयते ॥ पक्षान्तो 'वेटिवेतो वा ।४।१।१०३।' इत्यत्र वाऽनुवर्त्यं ॥ पक्षान्तरात् 'अदिशाखेरुक्तगुणि दर्शं गणपत्यर्थेश्च' इत्येवं ॥ [illegible] [illegible] ॥ [illegible] [illegible] इति [illegible] ॥

श्याता। धर्ता। गाता। पविता। डयिता। स्नन्ता स्यन्दिता। क्लप्ता कल्पिता। स्पर्धा। दरिता दरीता॥

१४७८ सहलुभेच्छरुषरिषस्तिः।७।२।४८। सहादिभ्यः ता-देरर्थस्य इड्वा भवति॥ सोढा सहिता। रब्धा। लोब्धा। लोभिता। रोष्टा॥ वा इट इट् तरिता तरीता। ऋतीयिता अर्तिता। त्यक्ता। सङ्क्ता। गोपायिता गोप्ता गोपिता। धूपायिता धूपिता। तप्ता। यष्टा। गन्ता। वा अम् स्रष्टा सर्ष्टा। नन्ता। यन्ता। कमिता। तदि प्रकन्ता। भ्रमिता। अक्षीता। अनिटि कटुट्। अष्टा। सहलुभेति वेद्। रुष रिष हिंसायां। रोषिता रोष्टा। रेषिता रेष्टा। कष्टा कर्ष्टा। दंष्टा। दग्धा। मेढा। श्रयिता। घस्ता। वस्तिता यष्टा। वस्ता। वोढा। व्याता। ह्वाता। भक्ता। रङ्क्ता। दीशंसिता। शीशासिता। शसा। गूहिता गोढा। श्रयिता। हञ् हरणे हर्ता। भृञ् भरणे भर्ता। नेता॥ अथ अदादिः॥ वेदिता। हन्ता। मरिता। मार्जिता मार्ष्टा। वक्ता। रोदिता। स्वप्ता। अनिता। अनेकाच्त्वादिट् जागरिता। अ-स्ततिस्यातो गुरु दरिद्रिता। चकासिता। शासिता वशिता। रविता। क्षविता। सक्ष्णविता। स्नविता। नविता। चविता। एता। स्याता। चक्षिता। ईरिता। सोता। सविता। अध्येता। द्वेष्टा। दोग्धा। ऊर्णविता ऊर्णुविता। स्तोता॥ अथ ह्वादि.। अर्ता॥ अथ दिवादिः। शक्ता वेत्ता। सहेति वेद् लोभिता लोब्धा पोष्टा तोष्टा। रुष रोषणे। रोषिता। रोष्टा। रधादित्वाद्वेद्। नशिता नंष्टा। तर्पिता तप्ता तर्प्ता। दर्पिता द्रप्ता दर्प्ता। द्रुहमुहष्णुहष्णिहो वेति वा घः पक्षे ढः। द्रुह जिघांसायां। द्रोहिता द्रोग्धा द्रोढा। एवं मुह वैचित्ये। मोहिता मोग्धा मोढा। ष्णुह उद्गिरणे। स्नोहिता स्नोग्धा स्नोढा। ष्णिह प्रीतौ। स्नेहिता स्नेग्धा। स्नेढा। जरिता जरीता। शाता। जनिता॥ अथ स्वादिः॥ धविता धोता। वरिता वरीता॥ अथ तुदादिः॥ आस्तरिता आस्तरीता। मिङ्क्ता नि-

प्कोपिता ॥ अथ तुदादिः। ओव्रश्‍चू छेदने। व्रष्टा भ्रष्टा। ऋष्टा कृष्टा। स्रष्टा। मङ्क्ता। स्प्रष्टा स्पर्ष्टा। भ्रष्टा मर्ष्टा। सहेति वेट् एष्टा एषिता। कुटादेर्ङिद्वत्त्वान्नेट् कुटिता। पुटिता। कुचिता। घुटिता। स्फुरिता। नुविता। कुविता। स्वङ्क्ता। रव्धा। लव्धा॥ अथ रुधादिः वेत्ता॥

१४७९ अञ्जोऽसेः।४।२।१४०। अञ्जो वलादेरिड्वा भवति न सेः॥ अञ्जिता अङ्क्ता॥

१४८० इटि विजः।४।१।१४५। विजेरिडादौ प्रत्यये ङिद्वद् भवति॥ विजिता शेषं सुगमं॥ प्रागुक्तप्रक्रियया नेयाः॥

लङ्लृटोः स्यः। अस्पर्द्धिष्यत स्पर्द्धिष्यते। अबीभत्सिष्यत बीभत्सिष्यते। अवन्दिष्यत वन्दिष्यते। अहत्स्यत हत्स्यते। अतितिक्षिष्यत तितिक्षिष्यते। अजुगुप्सिष्यत जुगुप्सिष्यते। अत्रप्स्यत अत्रपिष्यत। त्रप्स्यते त्रपिष्यते अपनायिष्यत् अपनिष्यत। पनायिष्यति पनिष्यते। अपणायिष्यत् अपणिष्यत। पणायिष्यति पणिष्यते। अक्षंस्यत अक्षमिष्यत। क्षंस्यते क्षमिष्यते। अकामयिष्यत अकमिष्यत। कामयिष्यते कमिष्यते। अघाक्ष्यत अगाहिष्यत। घाक्ष्यते गाहिष्यते। अस्मेष्यत स्मेष्यते। अकोप्स्यत कोप्स्यते। अगास्यत गास्यते। अधरिष्यत धरिष्यते। अपविष्यत पविष्यते। अडयिष्यत डयिष्यते। अद्योतिष्यत द्योतिष्यते। अस्रंसिष्यत स्रंसिष्यते॥

१४८१ न वृद्भ्यः।४।२।१७२। वृतादिभ्यो वलादेरिड् न भवति अतङि परे॥ वृतुङ् वर्तने। अवर्त्स्यत् वर्त्स्यति। अस्यन्त्स्यत् स्यन्त्स्यति। अकल्प्स्यत् कल्प्स्यति। तङीटि अवर्तिष्यत वर्तिष्यते। अस्यन्दिष्यत स्यन्दिष्यते। अकल्पिष्यत कल्पिष्यते। अज्वरिष्यत ज्वरिष्यते। अस्मरिष्यत् स्मरिष्यति। अदरिष्यत् अदरीष्यत्। दरिष्यति दरीष्यति। अभोत्स्यत् भोत्स्यति। अभोत्स्यत भोत्स्यते। असत्स्यत् सत्स्यति।

अक्रीक्ष्यत् क्रोक्ष्यति । अरोक्ष्यत् रोक्ष्यति । अजेप्यत् जेप्यति । व्यजेप्यत विजेप्यते । अधास्यत् धास्यति । ध्यै स्मृ चिन्तायाम् । अध्यास्यत् ध्यास्यति । औस्वृ शब्दोपतापयो । अस्वरिष्यत् स्वरिष्यति । अतरिष्यत् अतरीष्यत् । तरिष्यति तरीष्यति । आर्तीयिष्यत आर्तिष्यत् । ऋतीयिष्यते अर्तिष्यति अचिकित्सिष्यत् अकेतिष्यत् । चिकित्सिष्यति केतिष्यति । असङ्क्ष्यत् सङ्क्ष्यति ॥ यभ जभ मैथुने । अयप्स्यत् यप्स्यति ॥

१४८२ अतङः ।४।२।१७१। गमे परस्य सादेर्लृशश्च अतङीट् नित्य भवति ॥ अगमिष्यत् गमिष्यति । समगस्यत सगस्यते । अयस्यत् यस्यति । अक्रमिष्यत् क्रमिष्यति । तङि प्राक्रस्यत प्रक्रस्यते । अभ्रमिष्यत् भ्रमिष्यति । अक्रक्ष्यत् अक्रर्क्ष्यत् । क्रक्ष्यति क्रर्क्ष्यति । अदक्ष्यत् दङ्क्ष्यति । अधक्ष्यत् धक्ष्यति । रह त्यागे । अरहिष्यत् रहिष्यति । अश्रयिष्यत् श्रयिष्यति । अवत्स्यत् वत्स्यति । अवदिष्यत् वदिष्यति । अयक्ष्यत् अयक्ष्यत । यक्ष्यति यक्ष्यते । अवास्यत् अवास्यत । वास्यति वास्यते । अशीशासिष्यत् अशीशासिष्यत । शीशासिष्यति शीशासिष्यते । अदीदासिष्यत् अदीदासिष्यत । दीदासिष्यति दीदासिष्यते । त्विषी दीप्तौ । अत्वेक्ष्यत् अत्वेक्ष्यत । त्वेक्ष्यति त्वेक्ष्यते । अघोक्ष्यत् अघोक्ष्यत । अगूहिष्यत् अगूहिष्यत । घोक्ष्यति घोक्ष्यते । गूहिष्यति गूहिष्यते । अश्रयिष्यत् अश्रयिष्यत । श्रयिष्यति श्रयिष्यते ॥ अथ अदादि ॥ अवेदिष्यत् वेदिष्यति । अहनिष्यत् हनिष्यति । अभविष्यत् भविष्यति । अमार्क्ष्यत् अमार्जिष्यत् । मार्क्ष्यति मार्जिष्यति । अवक्ष्यत् वक्ष्यति । अरोदिष्यत् रोदिष्यति । अस्वप्स्यत् स्वप्स्यति । अस्तात्नित्यातो लृट् अदरिद्रिष्यत् दरिद्रिष्यति । अशासिष्यत् शासिष्यति । अरविष्यत् रविष्यति । ऐष्यत् एष्यति । लृङि वा गाङ् । इङ् अध्ययने । अध्यगीष्यत अध्यैष्यत ।

१ आर्चाऽचीत्यत्र ऋत इत्युक्तत्वात् अरादेशाभावात् मृजुधातो ऋकारो वर्तते तत अजादौ प्रत्यये आर्वो भवति । यत्तु अर प्रासिस्त्राचि परेऽपि ऋताऽभावात् ऋतोऽत आद्धवत्येव ॥

लटि न गाङ् अध्यैष्यत अदास्यत्। यास्यति। आख्यास्यत आख्यास्यते। आचाक्षिष्यत आचाक्षिष्यते। ऐरिष्यत ईरिष्यते। असाविष्यत असोष्यत। साविष्यते सोष्यते। अद्वेक्ष्यत् अद्वेक्ष्यत। द्वेक्ष्यति द्वेक्ष्यते। और्णविष्यत् और्णुविष्यत्। और्णविष्यत और्णुविष्यत। ऊर्णविष्यति ऊर्णुविष्यति। ऊर्णविष्यते ऊर्णुविष्यते॥ अथ ह्वादिः। अभेष्यत् भेष्यति। अपरिष्यत् अपरीष्यत्। परिष्यति परीष्यति। आरिष्यत् आरिष्यति। अहास्यत् हास्यति। अवेक्ष्यत् अवेक्ष्यत। वेक्ष्यति वेक्ष्यते॥ अथ दिवादि॥ नृतै गात्रविक्षेपणे॥

**१४८१ कृत्तृदचृच्छृदस्स्यसौ** ।४।२।१६९। कृत् तृद् नृत् चृत् छृद् इत्येतेभ्यः सादेर्स्यस्य इड्वा भवति न से[1]॥ अनर्त्स्यत् अनर्तिष्यत्। नर्त्स्यति नर्तिष्यति॥ क्षिप प्रेरणे॥ आक्षेप्स्यत् क्षेप्स्यति। अरात्स्यत् रात्स्यति। अव्यत्स्यत् व्यत्स्यति। सिध्यतिति नेट् अपोक्ष्यत् पोक्ष्यति। अशोक्ष्यत् शोक्ष्यति। अतोक्ष्यत् तोक्ष्यति। अदोक्ष्यत् दोक्ष्यति। अश्लेक्ष्यत् श्लेक्ष्यति। शक मर्षणे। अशक्ष्यत् शक्ष्यति। अस्वेत्स्यत् स्वेत्स्यति। अक्रोत्स्यत् क्रोत्स्यति। अक्षोत्स्यत् क्षोत्स्यति। अशोत्स्यत् शोत्स्यति। असेत्स्यत् सेत्स्यति। अशमिष्यत् शमिष्यति। अक्लेत्स्यत् अक्लेदिष्यत्। क्लेत्स्यति क्लेदिष्यति। अमेदिष्यत् मेदिष्यति। रधादित्वाद्वेट्। अनङ्क्ष्यत् अनशिष्यत्। नङ्क्ष्यति नशिष्यति। अत्रप्स्यत् अतप्र्स्यत्। अतर्पिष्यत् त्रप्स्यति तप्र्स्यति तर्पिष्यति। अद्रप्स्यत् अदप्र्स्यत् अदर्पिष्यत्। द्रप्स्यति दप्र्स्यति दर्पिष्यति। अद्रोक्ष्यत् अद्रोहिष्यत्। द्रोक्ष्यति द्रोहिष्यति। अमोक्ष्यत् अमोहिष्यत्। मोक्ष्यति मोहिष्यति। अस्नोक्ष्यत् अस्नोहिष्यत्। स्नोक्ष्यति स्नोहिष्यति। अस्नेक्ष्यत् अस्नेहिष्यत्। स्नेक्ष्यति स्नेहिष्यति। अजरिष्यत अजरीष्यत्। जरिष्यति जरीष्यति। अशास्यत् शास्यति। अजनिष्यत जनिष्यते। अपत्स्यत पत्स्यते। अवेत्स्यत

१ कृतै छेदने कृतं वेष्टने इति द्वयोरपि ग्रहणं। तृद हिंसानादरयो। चृतै हिंसाग्रन्थनयो। छृदृर् दीप्तिवमनयो। छृद संदीपने॥

वेत्स्यते। सृजि विसर्गे। 'सृजदृशोऽम् जल्यकि इत्यम्। अम्मस्य इति नेट्। असक्ष्यत सक्ष्यते। दूङ् परितापे। अदविष्यत दविष्यते॥ अथ स्वादि॥ अस्तरिष्यत् अस्तरीष्यत। स्तरिष्यति स्तरीष्यते। अवरिष्यत् अवरीष्यत्। अवरिष्यत अवरीष्यत। वरिष्यति वरीष्यति। वरिष्यते वरीष्यते। अधविष्यत् अधोष्यत्। अधविष्यत अधोष्यत। धविष्यति धोष्यति। धविष्यते धोष्यते। आप्स्यत् आप्स्यति। राध साध संसिद्धौ। असात्स्यत् सात्स्यति॥ अथ क्र्यादि। अप्रेष्यत् अप्रेष्यत। प्रेष्यति प्रेष्यते। अपविष्यत् अपविष्यत। पविष्यति पविष्यते। आरिष्यत् आरीष्यत्। अरिष्यति अरीष्यति। अभरिष्यत् अभरीष्यत्। भरिष्यति भरीष्यति। अज्ञास्यत् अज्ञास्यत। ज्ञास्यति ज्ञास्यते। अभन्त्स्यत् भन्त्स्यति॥ मन्थ विलोडने। अमन्थिष्यत् मन्थिष्यति। निरकोक्ष्यत् निरकोषिष्यत्। निष्कोक्ष्यति निष्कोषिष्यति॥ अथ तुदादि॥ अदेक्ष्यत् अदेक्ष्यत। देक्ष्यति देक्ष्यते। अभ्रक्ष्यत् अभर्क्ष्यत। भ्रक्ष्यति भर्क्ष्यति। अवेत्स्यत् अवेत्स्यत। वेत्स्यति वेत्स्यते। कृती छेदने। वेट्। अकर्त्स्यत् अकर्तिष्यत्। कर्त्स्यति कर्तिष्यति। अमक्ष्यत् मक्ष्यति। अमङ्क्ष्यत् मङ्क्ष्यति। अस्प्रक्ष्यत् अस्पर्क्ष्यत्। स्प्रक्ष्यति स्पर्क्ष्यति। अम्रक्ष्यत् अमर्क्ष्यत्। म्रक्ष्यति मर्क्ष्यति। अकुटिष्यत् कुटिष्यति। अस्फुटिष्यत् स्फुटिष्यति। अनुविष्यत् नुविष्यति। अद्रुष्यत् द्रुष्यति। उदविजिष्यत् उद्विजिष्यते। अस्पङ्क्ष्यत स्पङ्क्ष्यते। अरप्स्यत रप्स्यते। अलप्स्यत लप्स्यते॥ अथ रुधादि॥ अभेत्स्यत् अभेत्स्यत। भेत्स्यति भेत्स्यते। भञ्जो अवमर्दने। अभङ्क्ष्यत् भङ्क्ष्यति। आङ्क्ष्यत् आञ्जिष्यत् अङ्क्ष्यति अञ्जिष्यति। ण्यन्तानां प्राग्वत्॥

कर्म्मभावकर्म्मकर्त्तृषु प्राग्वत्तङादि॥

लिङि॥ स्पर्द्धिषीष्ट चीमरिसषीष्ट वन्दिषीष्ट तितिक्षिषीष्ट तेजिषीष्ट।

---

१ भ्रस्जसृजमृजयजराजभ्राजच्छशां षः इत्यत्र विजृत् पृथग्भावे इत्यस्य इट्प्रतिषेध। ओवीजेड् इत्यस्य तु ऐदित्करणसामर्थ्यात्॥

कुङ् शब्दे । वा ञिट् । काविषीष्ट कोषीष्ट । धारिषीष्ट धृषीष्ट । मेङ् प्रतिदाने । आत् आतो यम् मायिषीष्ट मासीष्ट । पायिषीष्ट पविषीष्ट । डायिषीष्ट डयिषीष्ट । ज्वरिषीष्ट । हृत्भ्यामिति वेट् । स्मारिषीष्ट स्मरिषीष्ट स्मृषीष्ट । भुत्सीष्ट धायिषीष्ट धासीष्ट । स्थायिषीष्ट स्थासीष्ट । तारिषीष्ट तरिषीष्ट तीर्षीष्ट । ऋतीयिषीष्ट अर्तिषीष्ट । चिकित्सिषीष्ट । केतिषीष्ट । सङ्क्षीष्ट । गोपायिषीष्ट गोपिषीष्ट । धूपायिषीष्ट धूपिषीष्ट । गंसीष्ट गैसीष्ट । क्रंसीष्ट । अक्षिषीष्ट अक्षीष्ट । तक्षिषीष्ट तक्षीष्ट । क्रुक्षीष्ट । दर्शिषीष्ट दृक्षीष्ट । दङ्क्षीष्ट धक्षीष्ट । श्वायिषीष्ट श्वयिषीष्ट । वत्सीष्ट वदिषीष्ट । यक्षीष्ट । वप्सीष्ट वक्षीष्ट । वायिषीष्ट वासीष्ट । दीदांमिषीष्ट । शीशांसिषीष्ट । श्रायिषीष्ट श्रयिषीष्ट । हारिषीष्ट हृषीष्ट । नायिषीष्ट नेषीष्ट ॥ अथ अदादिः ॥ वेदिषीष्ट । वा ञिट् ॥

१४८४ ह्नो घः ।४।१।२२९। हनो ञिति णिति च ह्स्य घो भवति ॥ घानिषीष्ट । वधिषीष्ट । भाविषीष्ट । मार्जिषीष्ट मर्जिषीष्ट मृक्षीष्ट । वक्षीष्ट । रोदिषीष्ट । दरिद्रिषीष्ट । राविषीष्ट रविषीष्ट स्नाविषीष्ट । गंस्नोरिति नेट् । स्नोषीष्ट । आयिषीष्ट एषीष्ट । यायिषीष्ट यासीष्ट । साविषीष्ट सविषीष्ट सोषीष्ट । ऊर्णाविषीष्ट ऊर्णविषीष्ट ऊर्णुविषीष्ट ॥ अथ ह्वादिः ॥ भायिषीष्ट भेषीष्ट ॥ अथ दिवादिः ॥ कृत्तृदिति वेट् । नर्तिषीष्ट नृत्सीष्ट । रधादित्वाद्वेट् नशिषीष्ट नङ्क्षीष्ट । अप्सीष्ट तर्पिषीष्ट तृप्सीष्ट । द्रप्सीष्ट दर्पिषीष्ट दृप्सीष्ट । द्रोहिषीष्ट । ध्रुक्षीष्ट । जनिषीष्ट दीपिषीष्ट ॥ अथ स्वादिः ॥ सायिषीष्ट सेसीष्ट । क्र्यादिः । ज्ञायिषीष्ट ज्ञासीष्ट ॥ तुदादि[1] । कर्त्तिषीष्ट कृत्सीष्ट । मङ्क्षीष्ट । एषिषीष्ट इत्यादि सर्वं प्रागुक्तप्रक्रियया नेयं॥

लिटि ॥ पस्पर्द्धे । पनायांचक्रे पेने पणायाञ्चक्रे पेणे । सस्मरे । शश्रे । स्वेने सस्वने । रेजे रराजे । वेमे ववमे । जिग्ये । दधे । पपे । आरे । तेरे ऋतीयाञ्चक्रे आनृते । चिकित्सांचक्रे चिकिते । गोपायांचक्रे जुगुपे ।

1 गमो मेति किद्वत्वे हन्मन्येति लुक् ॥

धूपायाञ्चक्रे दुधूपे । जग्मे । बभ्रमे । श्रेमे । फेले । शशसे । ऊपे । ददृशे । आनर्हे । शुशुवे । शिश्रिये । ऊपे । ऊहे । ऊदे । ईजे । ऊपे । ऊहे । ऊवे । ऊये । वये । विव्ये । जुहुवे । मेजे । ररञ्जे । चस्ने । दीदासांचक्रे । शीशासांचक्रे । जुगुहे । शिश्रिये । निन्ये ॥ अथ अदादिः ॥ विविदे विदांचक्रे । जघ्ने । बभूवे । ममार्जे ममृजे । ऊचे । सुषुपे । आने । शश्वसे । जजक्षे । जजागरे । जागराञ्चक्रे । दरिद्राञ्चक्रे । चकासांचक्रे । शशासे । ऊशे । चुक्ष्णुवे । सुस्नुवे । नुनुवे । ईये । यये । चख्ये । चचक्षे । ईरांचक्रे । अधिजगे । ऊर्णुनुवे । तुष्टुवे ॥ अथ ह्वादिः ॥ बिभयांचक्रे बिभ्ये । जिह्रयांचक्रे जिह्रिये । पप्रे । जहे । ममे । बिभराञ्चक्रे बभ्रे । ददे ॥ अथ दिवादिः ॥ तत्रसे त्रेसे । अपरेधे । आरराधे । विविदे । ऊचे । जजरे ॥ जेरे ॥ अथ स्वादिः ॥ तस्तरे । चक्रे । दुधुवे । शुश्रुवे । जिग्ये । देमे ॥ अथ क्र्यादिः ॥ तस्तरे । चकरे । शशरे । शश्रे । पपरे पप्रे । बभरे । ददरे दद्रे । जिज्ये । जज्ञे । श्रेथे शश्रन्थे ग्रेथे जग्रन्थे ॥ अथ तुदादिः ॥ बभर्जे बभ्रज्जे । उज्झाञ्चक्रे ईपे । व्यच व्याजीकरणे । विविचे ॥ अथ रुधादिः ॥ आनञ्जे ॥ अथ चुरादिः ॥ लुण्टयाञ्चक्रे । इत्यादि सर्वं योज्यं ॥

लुङि अस्पर्द्धि । अपनायि अपानि अपनिषाताम् । अपणायि अपाणि अपणिषातां । मजन्निति नात् । अक्षमि अक्षमिषाताम् अक्षंसाताम् । अयंरमित्यनिषेधादात् । अकामि । णिश्रिदि अकमिचमीति न ह्रस्वः । णिलुक् । अकामिषाताम् । अकामयिषाताम् । अप्यायि । अतायि । अगाहि अगाहिषाताम् । अघाक्षाताम् । अस्मायि अस्मायिषाताम् अस्मेषाताम् । अद्योति । अशोभि । अरोचि । अश्वेति । अमेदि । आस्वेदि । अघोटि । अलोटि । अलोठि । अक्षोभि । असम्भि । अस्रंसि । अभ्रंशि । अध्वंसि । अवर्ति । अवर्द्धि । अशर्द्धि । अस्यन्दि । अक्लृपि । अज्वारि

१ लिव्यडीति यञो वेद् । तस्य च ह्रल्व्यर्थत्वात्तमिन्कृते पश्चात् द्रि ॥

अज्वारिषाताम् । अनाटि । अज्वालि । अस्मारि अस्मारिषाताम् अस्मरिषाताम् अस्मृषाताम् । अश्रायि अश्रायिषाताम् अश्रासाताम् । अरामि । अबोधि अभुत्साताम् । अवामि अवमिषाताम् । असादि अशादि । अद्रावि अद्राविषाताम् अद्रोषाताम् । एव अस्रावि अस्राविषाताम् अस्रोषाताम् । अघागि अघायिषाताम् अघासाताम् । एवमादन्तानाम् अध्मायि । अक्ष्मायि । अस्थायि । अस्नायि । अदायि । असारि । आरि । आरिषाताम् । अतारि अतारिषाताम् अतरिषाताम् अतरीषाताम् अतीर्षाताम् । आर्त्तायि आर्ति । अज्योति । अस्कान्दि । अस्कन्त्साताम् । प्रानाजि । असञ्जि असङ्क्षाताम् । अगोपायि अगोपि । अधूपायि अधूपि । आगामि अगसाताम् । असर्पि असृप्साताम् । अनामि अनसाताम् । अयामि । अशासि । अकर्षि अकृक्षाताम् । अदर्शि अदर्शिषाताम् अदृक्षाताम् । अदाहि अधक्षाताम् । अमेहि । अश्वायि अश्वायिषाताम् अश्वयिषाताम् । अवासि । अवादि अवदिषाताम् । अयाजि । अवापि । अवाहि । अवायि अव्यायि अह्वायि । अदीदासि । अशीशासि । अगूहि अगूहिषाताम् अघुक्षाताम् । अश्रायि । अनायि ॥ अथ अदादि ॥ अवेदि । अघानि अघानिषाताम् । अहसाताम् । स्थानिवद्भावेन अनुपान्त्यत्वात् नात अवधि अवधिषाताम् । अभावि । अमार्जि अमार्जिषाताम् अमृक्षाताम् । अवाचि । अरोदि । अस्वापि । आनि । अश्वासि । अजाक्षि । अजागारि । अदरिद्रि । अचकासि । अशासि । अवाशि । अरावि अराविषाताम् अरविषाताम् । अक्षावि अक्षाविषाताम् अक्षविषाताम् । अक्ष्णावि । अस्नावि अस्नाविषाताम् अस्नोषाताम् । अनावि । अयावि । अगावि । अयायि । आख्यायि । ऐरि । ऐडि । ऐशि । आसि । अवासि अवसिषाताम् । आशासि । असावि । अध्यगायि अध्यायि । अद्वेषि । प्रौर्णावि । अस्तावि ॥ अथ ह्वादि ॥ अमायि । आरि ॥ अथ दिवादि ॥ अपोषि

---

१ गमात सूत्रेण सकारादिप्रत्यय विकल्पनेट्प्राप्तौ गमस्तोरसुप्तत्वाने इति नेट् ॥

भूयतेऽनेन सुभवम्। ईषद्भवम्। एवं दुश्शयं सुशयम् ईषच्छय। दुःखेन क्रियते दुष्करः। सुखेन क्रियते सुकरः ईषत्करः एवं दुर्बोध. सुबोधः ईषद्बोध. दुर्लभः सुलभ. ईषल्लभः इत्यादि सर्वत्र योज्यं ॥

२०४८ च्वौ कर्त्राप्याद् भूकृञः ।४।४।१००। कृच्छ्राकृच्छ्रयोर्दुस्स्वीषद्भ्यः पराभ्यां च्व्यर्थे वर्तमानाभ्यां कर्तृकर्मभ्यां परात् भुवः कृञश्च खो भवति ॥ खित्वात् मम्। दुःखेनानाढ्येनाढ्येन भूयते दुराढ्यंभवं देवदत्तेन। एवं स्वाढ्यंभवम् ईषदाढ्यंभवं। दुःखेनानाढ्यः आढ्य. क्रियते दुराढ्यंकरः स्वाढ्यंकरः ईषदाढ्यंकर. ॥

२०४९ आतोऽनः ।४।४।१०१। कृच्छ्राकृच्छ्रयोर्दुस्स्वीषद्भ्यः आदन्तात् धातोरनो भवति ॥ खापवादः। दुर्ज्ञानं सुज्ञानं ईषज्ज्ञानम् इत्यादि ॥

२०५० शास्युधिदृशिधृषिमृषः ।४।४।१०२। कृच्छ्राकृच्छ्रयोर्दुस्स्वीषद्भ्यः शासादिभ्योऽनो भवति ॥ दुःशासनः सुशासनः ईषच्छासन. दुर्योधनः सुयोधनः ईषद्योधनः दुर्दर्शनः सुदर्शनः ईषद्दर्शनः दुर्धर्षण. सुधर्षणः ईषद्धर्षणः दुर्मर्षणः सुमर्षणः ईषन्मर्षणः। योगविभागात् खोऽपि। दुर्धर्ष इत्यादि ॥

२०५१ निषेधेऽलंखलौ क्त्वा ।४।४।१४१। अलमि खलौ चोपपदे धातोः क्त्वा वा भवति निषेधे ॥ क इत्। तत्त्वादित्यव्ययत्वम्। अलं कृत्वा। खलु कृत्वा। पक्षे। अलं करणेन। अनिषेधे। अलङ्कारः इत्यादि ॥

२०५२ परावरे ।४।४।१४२। परावरत्वे गम्ये धातोः क्त्व. प्यो वा भवति ॥

२०५३ क्त्वोऽनञः प्यः ।२।२।१७१। समासान्तस्य क्त्व. प्यो

१ निषेधे वर्तमानयोरलं खलु इत्येतयोरुपपदयोः सतोः क्त्वाप्रत्ययो वा भवति ॥ वावचनाद्यथाप्राप्तं च ॥ अलं बाले रुदित्वा अलं बाले रुदितेनेत्यर्थः। लाक्षणिके खलुशब्दो निषेधार्थो द्रष्टव्यः। अलङ्कारोऽस्ति किं मा भाविनाऽर्थो रुदितेन ॥

२ अनञ इत्यनेन नञ्समासस्य [illegible] तेन परमङ्कत्वा इत्यादौ प्यादेशो न भवति ॥

भवति न नञः ॥ प इत् । पर्वतमतिक्रम्य नदी । नदीमगत्वा पर्वत ॥

२०५४ प्राक्काले ।४।४।१४४। अपरकालेन धातुनैककर्तृकात् प्राक्काले वर्तमानात् धातो ~ क्त्वा भवति ॥ भोजन पूर्वं पश्चाद्व्रजन । भुक्त्वा व्रजति । एधित्वा वन्दित्वा । यो हलादेरिति वा कित्त्व । मुदित्वा मोदित्वा हृत्वा तितिक्षित्वा तिजित्वा तेजित्वा त्रपित्वा त्रप्त्वा मीमांसित्वा पनायित्वा पनित्वा क्षमित्वा । क्रिजलीति दीर्घ । क्षान्त्वा कामयित्वा ॥

२०५५ त्व्यृदितः ।४।२।१६१। ऊदितो धातो क्त्वाया इड्वा भवति ॥ कामित्वा कान्त्वा क्नूयित्वा गाहित्वा गाढ्वा स्मित्वा च्युत्वा घृत्वा मित्वा दत्त्वा पवित्वा पूत्वा डयित्वा मेदित्वा स्वेदित्वा स्तम्भित्वा स्तब्ध्वा ससित्वा स्रस्त्वा अशित्वा अष्ट्वा ध्वसित्वा ध्वस्त्वा ॥

२०५६ क्ति ।४।१।१५६। धातोरिडादौ क्त्वाया क्विद्वन्न भवति ॥ वर्तित्वा वृत्त्वा स्यन्दित्वा ॥

२०५७ स्कन्दस्यन्दः ।४।१।१५७। स्कन्दस्यन्दो क्त्वाया क्विद्वन्न भवति ॥ स्यन्त्वा कल्पित्वा क्लृप्त्वा स्मृत्वा । क्त्युगिति नेट् । दीर्त्वा सोढ्वा सहित्वा रत्वा बुध्वा पतित्वा वमित्वा वान्त्वा सत्त्वा शस्त्वा रुद्ध्वा भूत्वा जित्वा धीत्वा पीत्वा घ्रात्वा ध्मात्वा स्थित्वा दात्वा ग्लात्वा गीत्वा ध्यात्वा तीर्त्वा चिकित्सित्वा सेधित्वा सिधित्वा सिध्वा स्कन्त्वा अञ्चित्वा अक्त्वा ॥ लुञ्च अपनये ॥

२०५८ थफवञ्चिलुञ्च्यृतितृषिमृषिकृश इटि ।४।१।१५१। नोपान्त्ययो स्थफान्त्ययोर्वञ्च्यादीना च इडादौ क्त्वाया क्विद्वा भवति ॥

१ नकार उपान्त्ये सति थकारान्तफकारान्तयोर्वाचे लुचि ऋति तृषि मृषि कृश इत्ये· तेषां च इडादौ क्त्वाप्रत्यये किद्वत्कार्यं भवति वा ॥ क्त्वीति प्रतिषेधविकल्प । श्रथित्वा श्रन्थित्वा ग्रन्थित्वा । गुफित्वा गुम्फित्वा । न्युपान्त्य इति किं? कुथ को थित्वा । पुथ पोथित्वा । रिफ रेफित्वा । न्युपान्त्य इति थफविशेषण नान्येषां सम्भवव्यभिचारात् । क्त्वायामिति किं? ग्रथित ग्रथितवान् । इटीति किं? वञ्चा मृष्ट्वा । वञ्चू मृषू इत्यादितौ क्त्वायां विकल्पितेटौ ॥

टुचित्वा लुञ्चित्वा लोचित्वा वक्त्वा त्यक्त्वा ॥

**२०५९ नशजस्त्वि न्युपान्त्ये** ।४।१।१५०। नश नोपान्त्यस्य च जान्तस्य तादौ क्त्वायां किद्वद्वा भवति ॥ सङ्क्त्वा सक्त्वा गोपायित्वा गुपित्वा गुप्त्वा गोपित्वा गत्वा नत्वा यत्वा क्रमित्वा ॥

**२०६० क्रमस्त्वि** ।४।१।१४०। क्रमो जलादौ क्त्वायामचो दीर्घो वा भवति ॥ क्रान्त्वा क्रन्त्वा भ्रमित्वा भ्रान्त्वा शसित्वा शस्त्वा । मृषू सहने । मृषित्वा मर्षित्वा मृष्ट्वा कृष्ट्वा मुषित्वा क्षोषित्वा क्षुष्ट्वा दृष्ट्वा दष्ट्वा शासित्वा शस्त्वा दग्ध्वा । इटि वत्वीत्यकित्त्वानेक् । श्रथित्वा । क्त्वामितीट् ॥

**२०६१ मृडमृदगुधकुषक्लिश्वदवसः**।४।१।१५८। मृडादीनामिडादौ क्त्वायां किद्वद् भवति ॥ उषित्वा उदित्वा इष्ट्वा उप्त्वा ऊढ्वा उत्वा वीत्वा हूत्वा धावित्वा धौत्वा पक्त्वा भक्त्वा रक्त्वा रङ्क्त्वा खनित्वा खात्वा शप्त्वा गूहित्वा गूढ्वा श्रित्वा हृत्वा नीत्वा॥ अथादादिः ॥ जग्ध्वा विदित्वा हत्वा भूत्वा मार्जित्वा मृष्ट्वा उक्त्वा रुदित्वा सुप्त्वा जागरित्वा दरिद्रित्वा शासित्वा शिष्ट्वा वशित्वा रत्वा इत्वा यात्वा मित्वा ईशित्वा सूत्वा शयित्वा द्विष्ट्वा ऊर्णुत्वा स्तुत्वा उक्त्वा ॥ अथ ह्वादिः ॥

**२०६२ ह्वाकास्त्वि** ।४।२।११७। हाकस्तादौ क्त्वायां हिर्भवति ॥ हित्वा मित्वा भृत्वा दत्त्वा हित्वा निक्त्वा । अथ दिवादिः ॥ देवित्वा । ऊत् । घूत्वा नर्तित्वा क्षिप्त्वा विद्ध्वा पुष्ट्वा क्षुधित्वा क्षोधित्वा शुद्ध्वा शमित्वा शान्त्वा असित्वा अस्त्वा आशित्वा अष्ट्वा तृपित्वा तर्पित्वा रपित्वा रोपित्वा रुष्ट्वा क्लिदित्वा क्लेदित्वा क्लित्वा गर्धित्वा गृद्ध्वा राधित्वा रद्ध्वा नशित्वा नष्ट्वा नंष्ट्वा द्रुहित्वा द्रोहित्वा द्रुग्ध्वा द्रुढ्वा ॥

---

१ नकार उपान्त्ये सति । नोपान्त्य इति विशेषणं जान्तस्य । सीति कि॰ विभज्य । स्वीति कि॰ नष्ट्वा ॥

२ त्व्युदित इति इट् विकल्प्यते । क्विजलि विरयनुनासिक इत्यादिना नित्यं दीर्घत्वम्. सायनेन विकल्प ॥

३ मृड् सुखसादने । मृद क्षोदे । गुद परिवेष्टने । कुष् निष्कर्षे । क्लिशो विबाधे । नेति निर्देशम । सर्वतो निषेधे यो इत्यादेरिति किञ्चे न प्राप्ते वचनम ॥

२०६३ जॄव्रश्च्योः क्त्वि ।७।२।५५। जॄव्रश्चिभ्यां क्त्वा इड् नित्य स्यादिति ॥ जरित्वा जरीत्वा शित्वा शात्वा छित्वा छात्वा सित्वा दित्वा जनित्वा जात्वा क्लिशित्वा क्लेशित्वा क्लिष्ट्वा गुध्वा मत्वा सृष्ट्वा सूत्वा लीत्वा नध्वा ॥ अथ स्वादि ॥ सुत्वा मृत्वा दुत्वा दूत्वा श्रुत्वा आप्त्वा दम्भित्वा दब्ध्वा अशित्वा अष्ट्वा ॥ अथ क्र्यादि[1] । क्रीत्वा गृहीत्वा पूत्वा पूर्त्वा ईर्त्वा जीत्वा ज्ञात्वा बध्वा । क्त्वि कित्त्वे नलुक् । श्रथित्वा श्रन्थित्वा मथित्वा मन्थित्वा ग्रथित्वा ग्रन्थित्वा मृदित्वा मृडित्वा क्षुभित्वा क्षुभित्वा क्षोभित्वा क्लिशित्वा क्लिष्ट्वा अशित्वा मुषित्वा ॥ अथ तुदादि ॥ तुत्त्वा भृष्ट्वा लिप्त्वा सिक्त्वा मुक्त्वा लुप्त्वा कर्तित्वा क्षित्वा मृत्वा कीर्त्वा इत्वा पृष्ट्वा मक्त्वा मङ्क्त्वा रुक्त्वा मुक्त्वा स्पृष्ट्वा मृष्ट्वा विष्ट्वा नुत्त्वा मज्जित्वा उज्झित्वा लुभित्वा लोभित्वा । गुफ गुम्फ ग्रन्थने । गुफित्वा गोफित्वा गुम्फित्वा इषित्वा एषित्वा इष्ट्वा कुटित्वा गुरित्वा विजित्वा स्वस्त्वा स्वङ्क्त्वा रब्ध्वा लब्ध्वा ॥ अथ तनादि । तनित्वा तत्वा सानित्वा सात्वा क्षणित्वा क्षत्वा मनित्वा मत्वा ॥ अथ रुधादि । रुद्ध्वा भित्त्वा युक्त्वा इन्धित्वा पिष्ट्वा भक्त्वा भङ्क्त्वा अञ्जित्वा अक्त्वा अङ्क्त्वा ॥ अथ चुरादि । चोरयित्वा कथयित्वा इत्यादि ॥ उपसर्गपूर्वत्वे ॥

२०६४ डाच्व्यूर्याद्यनुकरणं च तिः ।१।१।२६। डाजन्त च्व्यन्तमूर्याद्यनुकरण उपसर्गाश्च धातोः सम्बन्धि तिसञ्ज्ञं भवति ॥ तिदुम्भवतीति समासे ॥

२०६५ समासोऽनञः ल्यः ।२।२।१७१। समासात्क्त्वायाः ल्यो भवति न नञः ॥ प इत् । तगर्थ । प्रेष्य अभिवन्द्य प्रहृत्य अपत्रप्य प्रक्षम्य । णिलुक् । प्रकाम्य प्रोष्य विगाह्य विस्मित्य प्रच्युत्य विघृत्य ॥

---

१ जृ वयोहानौ इति क्र्यादि । जृषाति दैवादिकस्य सानुबन्धस्यर् । क्र्यादौ जीर्त्वा इति चिन्तामणावुक्तत्वात् ॥

२ डाच् च्विश्च ऊर्यादि च अनुकरण चेति द्वन्द्व । लघुत्वनाद्यदरणाच्चर्यमक्रमिति च्वे पूर्वनिपात प्राप्नोति । अत्र तु च्विश्च ऊर्यादि च अनुकरण चेति द्वन्द्वे पुनर्डाचा द्वन्द्व । श्रूयमाण शब्दो व्यक्तोऽव्यक्तो वा अभेदोपचारेण कृत्यधिमाद्गदनु क्रियते तदनुकरणम् ॥

२०६६ इ मेङः ।४।२।१०५। मेङः प्ये इङ्वा भवति ॥ अपमित्य अपमाय प्रदाय परित्राय प्रभूय रङ्क्षीय प्रमिद्य प्रम्विद्य विस्रभ्य विस्रस्य अवभ्रश्य प्रध्वस्य विवृत्य प्रस्यद्य प्रक्लृप्य विम्भृत्य प्रदीर्य प्रसह्य ॥

२०६७ मो वा ।४।१।२६३। हनादीना मध्ये मान्तस्य प्ये लुग् वा भवति ॥ विरम्य विरत्य निबुध्य विपत्य प्रवम्य प्रसद्य प्रहृह्य अनुभूय विजित्य प्रधाय प्रपाय आग्राय आध्माय प्रस्थाय प्रदाय मग्लाय सह्राय आध्याय वितीर्य विचिकित्स्य प्रसिध्य प्रस्कद्य प्राङ्य निलुञ्च्य प्रवच्य सन्त्यज्य प्रसज्य प्रगुप्य प्रणम्य प्रणम्य नियत्य नियम्य प्रकम्य विभ्रम्य प्रमुच्य विक्रुष्य सम्पृच्य सन्दश्य विदश्य प्रशस्य प्रदह्य प्रतिशुत्य प्रोप्य अनूद्य समिज्य प्रोप्य । प्ये चेति नेद् । प्रवाय ॥

२०६८ ज्यः ।४।१।११३। ज्येञः प्ये परे यज इन्न भवति ॥ सज्याय ॥

२०६९ परेर्वा ।४।१।११४। परेर्व्येञः प्ये यज इन्वा भवति ॥ परिव्याय परिवीय आहूय प्रधाव्य विपच्य सम्भज्य विरज्य प्रसज्य प्रलाय अभिदास्य विगुह्य आश्रित्य प्रहृत्य प्रकृत्य प्रणीय ॥ अदादि ॥ प्रजाध्य संविद्य ॥

२०७० प्ये ।४।१।२६२। हनादीनां प्ये लुग् भवति ॥ प्रहृत्य प्रमृज्य प्रोच्य प्ररुद्य प्रसुप्य प्रजागर्य प्रदरिद्य अनुशिष्य समुदस्य प्ररुत्य समित्य अधीत्य प्रयाय प्रमाय अधीस्य प्रसूय अतिशय्य अधीत्य प्रद्विष्य प्रोर्णुत्य प्रस्तुत्य प्रोच्य ॥ ह्वादिः ॥ आहुत्य विहाय प्रमाय निभृत्य प्रदाय विधाय प्रणिज्य ॥ दिवादि. ॥ दीर्घे । प्रदीव्य प्रनृत्य संक्षिप्य आविध्य प्रपुष्य प्रशुष्य संशुध्य प्रक्राम्य प्रास्य प्रभ्रस्य वितृप्य प्रकुप्य विक्लिद्य अभिगृध्य प्रणश्य अभिद्रुह्य निर्जीर्य निशाय निच्छाय व्यवसाय प्रदाय प्रज्ञाय प्रजन्य संक्लिश्य नियुध्य अभिमत्य उपयुज्य विसृज्य प्रसूय विलीय सन्नह्य ॥ स्वादिः ॥ प्रसुत्य आवृत्य विधूय संश्रुत्य प्राप्य प्रधृष्य प्रदम्भ्य व्यश्य ॥ क्र्यादि. ॥ विक्रीय प्रगृह्य सम्पूर्य आपूर्य आचीर्य ॥

२०७१ ज्यः ।४।१।११२। ज्यः प्ये यज इग् न भवति ॥ प्रज्याय विजाय सवय्य प्रश्रथ्य विमथ्य सग्रथ्य प्रमृद्य सम्मृड्य प्रमुद्य निगुप्य

संक्षुभ्य सन्दिश्य प्राश्य प्रमुष्य ॥ तुदादिः ॥ नितुद्य प्रभृज्य आलिप्य निषिच्य विमुच्य विलुप्य विकृत्य ॥

२०७२ क्षेरीः ।४।२।१०६। क्षे ल्ये ईद् भवति ॥ प्रक्षीय प्रमृत्य निकीर्य आदृत्य आपृच्छ्य निमज्ज्य प्ररुज्य सस्तृज्य आमृश्य निविश्य वि-मुच्य प्रवृश्च्य मोज्झ्य प्रलुभ्य निगुम्फ्य अभीप्य सङ्कुच्य आगूर्य उद्विज्य आस्वज्य आरभ्य उपलभ्य ॥ तनादि ॥ प्रतत्य प्रसत्य प्रसाय प्रक्षत्य विमत्य ॥ रुधादि ॥ निरुध्य विभिद्य नियुज्य सामिध्य प्रपिष्य निभज्य व्यज्य ॥ चुरादि ॥ प्रचोर्य प्रचिन्त्य ॥

२०७३ लघोर्हलः ल्येऽय् ।४।२।१०३। लघो परो यो हल् ततः परस्य णे ल्येऽय् भवति ॥ प्रकथय्य विगणय्य निघटय्य प्रशमय्य ॥

२०७४ वाऽऽप्नोः ।४।२।१०४। आप्नोतेर्णे ल्ये अय् वा भवति ॥ प्रापय्य प्राप्य । डाच् । पटपटाकृत्य । च्वि । शुक्लीकृत्य । ऊर्यादि । ऊरीकृत्य । अनुकरण । खाट्कृत्य ॥

२०७५ तिरोऽन्तर्धौ ।१।१।३१। अन्तर्धौ पिधाने तिरस् इत्यव्यय धातो सम्बन्धि तिसञ्ज्ञ भवति ॥ तिरोभूय तिरोधाय ॥

२०७६ नित्यं हस्तेपाणौ स्वीकृतौ ।१।१।३६। हस्ते पाणौ इत्येते अव्यये स्वीकृतौ कृञो धातो सम्बन्धिनी तिसञ्ज्ञे भवत ॥ हस्ते कृत्य पाणौकृत्य ॥

२०७७ प्राध्वं बन्धे ।१।१।३६। आनुकूल्ये प्राध्वमित्यव्ययं कृञो धातोस्सम्बन्धि तिसञ्ज्ञ भवति ॥ प्राध्वकृत्य । शेष सर्वं शास्त्रे ज्ञेय ॥

२०७८ पूर्वाग्रे प्रथमाभीक्ष्ण्ये क्त्वाणम् ।४।४।१४५। पूर्वादिषूपप-

१ धातोर्यो लघुस्तत परो यो हल् तस्मात्परस्य ण नित्य अय् इत्यादेशो भवति ॥ कथा रति किं प्रतिपाद्य गत । हल् इति भूतपूर्वगतिव्युदासार्थम् । लघोरिति लुप्यमाने हल इत्यसति ल्ये ल्पोरव्यवहितो णिर्न भवति । तत्र किमेकेन वर्णेन व्यवधानमात्रेऽय उत भूतपूर्वगतिरिति सन्दिह्येत । तत्र पूर्वगतौ प्रकट्य इत्यादावेव स्यात ॥

२ प्राध्वमिति मकारान्तमव्यय आनुकूल्ये वर्तते । आनुकूल्यार्थक प्राध्वमित्यमर ॥ तदानुकूल्य बन्धहेतुक बन्ध इत्युच्यते । तथाच बन्धहेतुके आनुकूल्ये मान्त प्राध्वमिति शब्द कृञो धातो सम्बन्धी तिसञ्ज्ञो भवति ॥ बन्ध इति किं प्रगतमध्वान प्राध्व ॥

३ पूर्व अग्र प्रथम इत्येतेषूपपदेषु आभाक्ष्ण्ये तथापाघो वक्ष्यमाणे तुल्यकर्तृकेऽर्थे

देषु आभीक्ष्ण्ये चार्थविशेषणे प्राक्काले धातोः खमुञ् वा भवति॥ सुतौ अर्थतः। पूर्वभोजं अग्रेभोजं प्रथमंभोजं दायंदायं । पक्षे त्वा । पूर्वं भुक्त्वा इत्यादि ॥

**२०७९ अन्यथैवंकथमित्थमः कृञोऽनर्थकात्** ।४।४।१४६। अन्यथादिभ्यः स्वार्थरहितात् कृञस्तुल्यकर्तृके खमुञ् वा भवति ॥ अन्यथाकारम् एवंकारं कथंकारम् इत्थंकारं भुङ्क्ते । पक्षे । अन्यथा कृत्वा भुङ्क्ते इत्यादि ॥

**२०८० आप्यादाक्रोशे** ।४।४।१४८। आक्रोशे गम्ये कर्मणः कृञः प्राक्काले खमुञ् वा भवति तुल्यकर्तृके ॥ चोरंकारमाक्रोशति । चोरं कृत्वा आक्रोशति । चोरोऽयमित्याक्रोशतीत्यर्थः ॥

**२०८१ विदृशिभ्यः कार्त्स्न्ये णम्** ।४।४।१५०। कर्मणो विदादिभ्यो दृशेश्च प्राक्काले तुल्यकर्तृके णम् वा भवति कार्त्स्न्ये गम्ये ॥ अतिथिवेदं भोजयति । कन्यादर्शं वरयति ॥

**२०८२ यावतो जीवविन्दात्** ।४।४।१५१। यावतो जीवविन्दाभ्यां णम् वा भवति तुल्यकर्तृके ॥ यावज्जीवमधीते । यावज्जीवति तावदधीते इत्यर्थः । यावद्वेदं गृह्णाति । यावद्विन्दति तावद्गृह्णातीत्यर्थः ॥

**२०८३ चर्मोदरात् पूरेः** ।४।४।१५२। चर्मोदराभ्यां पूरेः प्राक्काले तुल्यकर्तृके णम् वा भवति ॥ चर्मपूरमास्ते । उदरपूरमास्ते । चर्मोदरं च पूरयित्वा आस्ते इत्यर्थः ॥

**२०८४ तृतीयोपदंशः** ।४।४।१५५। तृतीयान्तेन युक्तादुपदंशः प्राक्काले तुल्यकर्तृके णम् वा भवति॥ मूलकोपदंशं भुङ्क्ते मूलकेनोपदश्य भुङ्क्ते इत्यर्थः

**२०८५ हिंसार्थात् तुल्याप्यात्** ।४।४।१५६। तृतीयान्तेन युक्तात्तुल्यकर्मणः तुल्यकर्तृकाच्च हिंसार्थाद्धातोः प्राक्काले णम् वा भवति ॥ खड्गप्रहारं शत्रुं जयति । खड्गेन प्रहृत्य शत्रुं जयति इत्यर्थः ॥

---

वर्तमानाद्धातो ततो खमुञ् प्रत्ययो वा भवति । खमुञा मुक्ते क्त्वा ॥ अतएव वाक्यार्थो भवति पूर्वं भुज्यते ततो मजतीति पूर्वशब्दोऽत्र प्राक्काले न तत्पदे ॥

१ बहुवचनात् त्रयाणामपि विदानां ग्रहणं । अन्यथा अदादयनदायोरदादेरेव ग्रहण निरनुबन्धस्यैवेति वा । कार्त्स्न्ये इति किं? अतिथिं विदित्वा भोजयति । कन्यां दृष्ट्वा वरयति । विद विद्ल विद विदः । विदश्च दृशिश्च विदृश्यस्तेभ्य इति समासः ।

**२०९२ च्वौ धाण्विनानाना** ।४।४।१७०। च्व्यर्थे धाणन्तेन विनानानाभ्यां च युक्तात् कृञो भुवश्च प्राक्काले तुल्यकर्तृके णम् क्त्वा च भवतः ॥ अद्विधा द्विधा कृत्वा द्विधाकारं । द्विधाकृत्य । एवं द्विधाभावं द्विधाभूय । ऐकध्यकारं ऐकध्यकृत्य ऐकध्यभावम् ऐकध्यभूय । विनाकारं विनाकृत्य विनाभावं विनाभूय । नानाकारं नानाकृत्य नानाभावं नानाभूय ॥

**२०९३ शुष्कचूर्णरूक्षात्पिष्यात् पिषस्तस्मिन् णम्** ।४।४।१७१। शुष्कादिभ्यः कर्मभ्यः पिषो णम् वा भवति तस्मिन्नेव पिषावुपपदे ॥ शुष्कपेषं पिनष्टि । चूर्णपेषं पिनष्टि । रूक्षपेषं पिनष्टि ॥

**२०९४ कृग्ग्रहोऽकृतजीवात्** ।४।४।१७२। अकृतशब्दात् कृञो णम् वा भवति । जीवशब्दात् ग्रहे तस्मिन् धातावुपपदे ॥ अकृतकारं करोति । जीवग्राहं गृह्णाति ॥

**२०९५ निमूलात् कषः** ।४।४।१७३। कर्मणो निमूलात् कषेर्णम् वा भवति तस्मिन् धातावुपपदे ॥ निमूलकाषं कषति ॥

**२०९६ समूलाद् घ्नश्च** ।४।४।१७४। कर्मणस्समूलात् हन्तेः कषश्च णम् वा भवति । तस्मिन् धातावुपपदे ॥ समूलघातं हन्ति । समूलकाषं कषति ॥

**२०९७ करणात्** ।४।४।१७५। करणवाचिनः सुबन्ताद्धन्तेर्णम् वा भवति तस्मिन् धातावुपपदे ॥ पाणिघातं हन्ति पाणिना हन्तीत्यर्थः । एवं खड्गघातं हन्ति खड्गेन हन्तीत्यर्थः ॥

**२०९८ नाम्नि बन्धः** ।४।४।१७८। करणवाचिनो नाम्नो बन्धेर्णम् वा भवति तस्मिन् धातावुपपदे ॥ मर्कटबन्धं बध्नाति । मर्कटनाम्ना बन्धेन बध्नातीत्यर्थः ॥

---

१ च्व्यर्थ इति किम्? द्विधा कृत्वा काष्ठानि गतः । संख्याया धा इत्यारभ्य अ तद्धित धाण इति प्रत्याहारः ॥

२ बन्ध इति प्रकृतिर्नामविशेषणं च । बध्यतेऽस्य बन्धनस्य यन्नाम तद्विषयात्करणवाचिनः । उष्ट्रावबन्धं बध्नाति । चण्डालबन्धं बध्नाति । क्रौञ्चबन्धं बध्नाति । महिषिकाबन्धं बध्नाति । अट्टालकादीनि बन्धननामस्थानि तैर्बध्नातीत्यर्थः ॥ अन्ये नामानि प्रत्ययावधि मन्यन्ते । प्रत्ययान्तं नाम भवति ॥ तेषामट्टालिका बन्धस्तस्मिन् इत्यादीनि बन्धनामधेयानि ॥

**२०९९ आधारात्** ।४।४।१७९। आधारवाचिनो नाम्नो बन्धेर्णम् वा भवति तस्मिन्नुपपदे ॥ चक्रबन्धं बध्नाति । चक्रनाम्नि बन्धे बध्नातीत्यर्थः ॥

**२१०० कर्तुर्जीवपुरुषान्नशिवहः** ।४।४।१८०। कर्तृवाचिनो जीवशब्दान्नशेर्णम् वा भवति पुरुषशब्दाद्वहः तस्मिन्नुपपदे ॥ जीवनाशं नश्यति । जीवो नश्यतीत्यर्थः । पुरुषवाहं वहति । पुरुषो भूत्वा वहतीत्यर्थः ॥

**२१०१ ऊर्ध्वात् पूरशुषः** ।४।४।१८१। कर्तुरूर्ध्वशब्दात् पूरिशुषिभ्यां णम् वा भवति तस्मिन्नुपपदे ॥ ऊर्ध्वपूरं पूर्यते ऊर्ध्वं पूर्यते इत्यर्थः । ऊर्ध्वशोषं शुष्यति ऊर्ध्वं शुष्यतीत्यर्थः ॥

**२१०२ आप्याच्चेच** ।४।४।१८२। औपम्ये कर्मण. कर्तुश्च पराद्धातोः णम् वा भवति तस्मिन्नुपपदे ॥ रत्ननिधायं निदधाति रत्नमिव निदधातीत्यर्थः। सैकतभेदं भिनत्ति शैलं । धनचायं चिनोति धर्मं । कर्ता महामतिनाशं नश्यति नास्तिकः तद्वन्नश्यतीत्यर्थः । एवं पण्डितमारं म्रियते । बालमारं म्रियते इत्यादि ॥

**२१०३ समर्थोऽस्त्यर्थधृषज्ञाशकग्लाघटसहार्हारभलभक्रमे तुम्** ।४।४।१८३। समर्थास्त्यर्थयोरुपपदयोर्धृषादिषु चोपपदेषु धातोस्तुम् वा भवति ॥ भोक्तुं समर्थः । भोक्तुं पर्याप्तः । भोक्तुमस्ति । भोक्तुं सम्भवति । भोक्तुं धृष्णोति । भोक्तुं जानाति । भोक्तुं शक्नोति । भोक्तुं ग्लायति । भोक्तुं घटते । भोक्तुं सहते । भोक्तुमर्हति । भोक्तुमारभते । भोक्तुं लभते । भोक्तुं प्रक्रमते । पक्षे भोजनसमर्थ इत्यादि ॥

**२१०४ तदर्थायां क्रियायां तुम् लृट् च** ।४।४।१८४।

---

१ औपम्ये सादृश्ये गम्यमाने । धनमिव धर्मं चिनोति । महामतेरिव मन्त्री महामतिरिति कश्चिन्मिथ्यादृष्टि ॥

२ समर्थश्च अस्तिश्च समर्थोऽस्ति तौ अर्थौ अभिधेयौ येषां ते समर्थास्त्यर्था पुनर्द्वंद्व ॥ ञिधृषा प्रागल्भ्ये । शक मर्षणे । भोक्तु समर्थं इत्यत्र भोजने सामर्थ्यं प्रतीयते भोक्तु प्रक्रमते अत्र भुजेरेवाद्यावस्थाने क्रियान्तरम् ॥ शक्तिग्रहणमसमर्थार्थं शक्यमेवंविध कर्तुमिति सौकर्यं प्रतीयते सम्भवो वा ॥ शक्त्या भुज्यते इत्यादावनभिधानान्न भवति ॥

३ तदर्थायां तस्यै इय तदर्था तस्यां तन्निमित्तायाम् । यस्माद्धातो स तुम्प्रत्ययो तदभिधेयार्थं चेत्क्रियान्तरं गम्यते ततस्तुम् । क्रियायामिति किं? भिक्षिष्ये ।

धातोर्वुण्ल्टौ तुम् च भवन्ति । तदर्थायां क्रियायां प्रयुज्यमानायाम् ॥ भोजको व्रजति । भोक्ष्ये इति व्रजति । भोक्तुं व्रजति ॥

**२१८५ लेट्तुमिच्छार्थे तुल्यकर्तृके** ।४।४।१८६। इच्छार्थे तुल्यकर्तृके तदर्थे क्रियान्तरे उपपदे धातोर्लेट्तुमौ भवत ॥ भुञ्जीयेतीच्छति भोक्तुमिच्छति कामयते । इत्याद्यनुक्तं सर्वं शास्त्रे ज्ञेयम् ॥

॥ इति कृत्सङ्ग्रहस्समाप्तः ॥



वन्दारुवृन्दपरिषट्टविलोलिताक्षवृन्दारकेश्वरकिरीटतटावकीर्णैः ॥
मन्दारपुष्पनिकरैर्विहितोपहारं वन्दामहे जिनपते पदपद्मयुग्मम् ॥ १ ॥

यो जानाति समं समस्तमनिशं यं सूरयस्साश्रिता
येनादर्शि विमुक्तिवर्त्म सुधियो यस्मै स्पृहां कुर्वते ॥
यस्मात्तत्त्वविनिश्चयोऽप्रतिहतं यस्यैव शास्त्रं जयी
यस्मिन् विस्मयनीयपुण्यमहिमा भूयात् स वः श्रेयसे ॥ २ ॥

सुविवेचितपदरूपा प्रकरणरचनाप्रवेशसुखसुभगा ॥
वाङ्मयमूर्तिस्सौरी कृतिरियमधिवसतु बुधहृदयम् ॥ ३ ॥

गहनं व्याकरणं स्यात् तत्रापि प्रक्रिया महागहनम् ॥
लिङ्लुङ्सन्यङ् कष्टं तस्मादपि घेट्परं महाकष्टम् ॥ ४ ॥

अम्भोजनेत्र हरितोरुगात्र दयाकलत्र वरशक्तिपात्रम् ॥
भव्याब्जमित्रं भुवने पवित्रं नाभेयपुत्रं प्रणमामि नित्यम् ॥ ५ ॥

मुकुरविमलगण्डं चन्द्रसङ्काशतुण्डं गजकरभुजदण्डं कामदाहाग्निकुण्डम् ॥
विनुतमुनिपषण्डं गोमठेशप्रचण्डं गुणनिवहकरण्डं नौमि नाभेयपिण्डम् ॥

॥ इति प्रक्रियासङ्ग्रहसहितं शाकटायनव्याकरणं समाप्तम् ॥

॥ श्रीरस्तु ॥

---

१ वर्तमाने इच्छार्थे तुल्यकर्तृके उपपदे यस्माद्धातोर्लेट्तुमौ उत्पद्येते तदर्थस्य चेत् कर्ता इच्छायास्यापि भवति ॥ इच्छार्थे इति किं? भोजको व्रजति । तुल्यकर्तृके इति किं? इच्छामि भुक्तां भवान् । क्रियायां तदर्थायामिति किं? इच्छन् भुङ्क्ते ॥

# ॥ शाकटायनीयसूत्रपाठः ॥

अइउण् । ऋक् । एओङ् । ऐऔच् । हयवरलञ् । ञमङणनम् । जबगडदश् । झभघढधष् । खफछठथट् । चटतव् । कपय् । शषसअ×क≍पः । हल् ॥

१ सात्मेतेत्
२ उता स्व
३ तेयान्
४ भाव्योऽग्
५ अप्रयोगीत्
६ स्वस्थानास्यैक्ये
७ आसन्न
८ (सगेन्धिना सम्बन्धे)
९ घङ्किति संख्या
१० बहुगण भेदे
११ (क्तसमासेऽध्यर्ध)
१२ अर्धपर्वपदो डत्
१३ पौत्रादि वृद्धम्
१४ प्रपौत्राद्यस्त्रीवंश्यज्यायोभ्रा
त्रो सति युवा
१५ (सत् सपिण्डेऽधिवयस्स्थाने
वा)
१६ (युववृद्ध कुत्सार्चे)
१७ नाम दु
१८ (त्यदादि)
१९ यस्याश्वादिरादैच्
२० (देश एवैङ् छादौ)
२१ प्राग्देशे
२२ क्रियार्थो धातु
२३ दाधा घ्वब्
२४ प्रादिर्नाप्रत्यये
२५ तस्यागतार्थाधिपर्यर्चास्वत्य-
तिक्रमात्युपसर्ग प्राक्
२६ डाच्च्यूर्याद्यनुकरण च ति
२७ (कारिकालमदोऽन्तस्मदसत
स्स्थित्यादिभूषानुपदेशापरी-
ग्रहादरक्षेपे)
२८ (कणेमन श्रद्धोच्छेदे)
२९ अस्त पुरोऽव्ययम्
३० गत्यर्थवदोऽच्छ.
३१ तिरोऽन्तर्धौ
३२ कृञो वा
३३ (मनस्युरस्युपाजेऽन्वाजेम
ध्येपदेनिवचने)
३४ (स्वाम्येऽधि)

१ ( )स्थ सूत्र प्रक्रियायामस्मदे न संगृहीतमिति ज्ञेयम् ॥

३५ साक्षादाद्यच्वि
३६ नित्यं हस्तेपाणो स्वीकृतौ
३७ ( जीविकोपनिपादिवे )
३८ प्राध्वं बन्धे
३९ तस्वन्‌डामघणतस्यांत्कान्तु-
न्तिसुङतस्वाभस्वरादीन्यव्य-
यम्
४० घ्यसल्यद्वन्द्वपतीड्डुत्
४१ प्रत्ययः कृतोऽपष्ठ्याः
४२ इजाद्यायात्तद्धितः
४३ घ्याद्यतिङ्कृत्
४४ पर·
४५ मिदचोऽन्त्यात्
४६ ( स्पर्धे )
४७ षष्ठ्याः स्थानेऽन्तेऽलः
४८ तस्मादादेः
४९ शिदङिदल्
५० स्थानीवाऽनलाश्रये
५१ परेऽचः प्राचोऽकिदीर्घयद्या-
सदस्क्लुग्विधौ
५२ क्षुर्चीगेनत्
५३ टिदादिः
५४ किदन्तः
५५ ( विशेषणम् )
५६ ( प्राक्‌पञ्चमीं )
५७ ( नसमस्यध्यादिषु )
५८ ( तरयादेः )
५९ ( प्रत्ययन्यकृप्यत्तकृत्यादेः )
६० ( कृत्संतिकारकस्यापि )
६१ तिङ्न वाक्यम्
६२ सुङ् पदम्
६३ नं क्ये
६४ सिद्वल्यधातोः
६५ नयृत्यन्तः
६६ स्त मत्वर्थे
६७ ( मनुर्नभोऽङ्गिरो वति )
६८ विरामेऽगिदनाङ्‌च्याद्यण्वानु-
नासिक·
६९ चर्जश·
७० न
७१ एचोऽच्ययवायाव्
७२ यत्रेवादिक·
७३ असे
७४ ह्स्वो वापदे
७५ ऋत्यकः
७६ ( ऋश्चोत्साचः )
७७ दीर्घः
७८ शस्यक्
७९ नन्तः पुंसः
८० द्लुच्यणः
८१ सहिवहोऽस्यौः
८२ इक्येङर्
८३ एजूच्यैन्
८४ प्रस्योढोढयूर्ह्पैष्ये

८५ स्वैरस्वैर्यक्षौहिण्याम्
८६ ओमाङि परः
८७ (एवेऽनियोगे)
८८ वौष्ठौतौ समासे
८९ आतृतीयाया ऋते
९० प्रवत्सतरकम्बलवसनार्णदशानामृणे
रस्वर्णे
९१ ऋत्यारुपसर्गस्य
९२ (सुपि वा)
९३ तथानिर्णेष्येड्वेड्
९४ पदान्तेऽस्येङः
९५ गोरेद्वा
९६ अवोऽच्यनक्षे
९७ इन्द्रे
९८ वातायनेऽक्षे
९९ न प्लुतस्यानितौ
१०० गितः
१०१ चादेरचोऽनाङः
१०२ ओत्
१०३ (सौ वेतौ)
१०४ (ऊँ चोञः)
१०५ (मयोऽचि वोऽसन्)
१०६ हलोऽनुनासिकेऽनुनासिकः
स्वः
१०७ प्रत्यये
१०८ रीत्योः
१०९ म्नां जय्यपदान्ते
११० शल्यनुस्वारः
१११ मम्मो हलि तौ
११२ (हि ल्ल्यामि)
११३ सम्राट्
११४ (खय् खयदशरि वा)
११५ (शरोऽनु द्वे)
११६ (यञो मयः)
११७ अचो ह्र्रोऽहृचः
११८ अदीर्घात्
११९ न संयोगे
१२० (पुत्रस्यादिपुत्रादिन्याक्रोशे)
१२१ (अचि)
१२२ शरः
१२३ ह्रस्वान् ङमः पदान्ते
१२४ दीर्घाच्छो वा
१२५ (प्लुतात्)
१२६ अजाद्याङः
१२७ (डाञ्माजोऽतो लुगितौ)
१२८ (न द्व्युक्तेः)
१२९ (तः)
१३० डाच्यादौ
१३१ द्वो द्विः
१३२ (हलो यमि यमो (मां) वा)
१३३ (जरि जरस्वे वा)
१३४ उदस्स्थास्तम्भः
१३५ चर्
१३६ जपि जश्

१३७ श्रौ श्रू स्वो
१३८ ष्टौ ष्टू
१३९ न शात्
१४० टो. पदान्तेनाम्नगरीनवतेः
१४१ तोऽपि
१४२ लि लः
१४३ जशो हो झप्वा
१४४ शश्छोऽमि
१४५ ङ्णो गकुडक् शरि
१४६ ङ्नस्तद् सोऽश्च.
१४७ नश्शि जक्
१४८ नून पि रीरक्
१४९ कास्कान् सीमक्
१५० छव्यम्यमशान.
१५१ पुमः खयि
१५२ ( समस्कृसि ग्लुक् च )
१५३ व्योऽप्याघोमोमगो
१५४ ( अच्यस्पष्टश्च )
१५५ वानुन्यात्
१५६ रेर्थे
१५७ अतोऽद्धप्यु
१५८ हल्यनञ्समासे लुक्तस्मात्
१५९ ( तद पादपूरणे )
१६० रोऽह्रोऽप्यसुब्रूपरात्रिरथन्तरे
१६१ विसर्जनीयस्य
१६२ ( वाह्पत्यादिषु )
१६३ सश्छन्यशारि
१६४ शारि वा
१६५ लुक् सयि परे .
१६६ कुपौ×क×पम्
१६७ तिरसस्तेऽसि
१३८ नमस्पुरस.
१६९ चतुर्निर्दुर्बहिराविःप्रादुसाम्
१७० सुचो वा
१७१ इसुसोऽपेक्षायाम्
१७२ (नाक्रियैकार्थे)
१७३ (समासेऽसमस्तस्य)
१७४ (पदेऽधशिरस)
१७५ कृकमिकसकुशाकर्णीकुम्भ-
पात्रेऽनोऽनव्ययस्य
१७६ प्रत्यये
१७७ न रन्ह‍ काम्ये
१७८ हृस्वात्सुपस्ति
१७९ निसोऽनासेवाया तपे
१८० कस्कादिषु

॥ इति शाकटायनीयसूत्रपाठे प्रथम स्याध्यायस्य प्रथम पाद समाप्त ॥

१ नयोऽचो ह्रस्वः
२ पञ्चतोऽनेकतरस्यान्यादेर्दरु स्वमो.
३ अलुग्वा
४ अतोऽम्
५ श्रुर्

६ ( जरसो वा )
७ इको लुक्
८ पुमांश्चान्यतोऽप्यपि
९ दध्यस्थिसक्थ्यक्ष्णोऽनङ्
१० नम् सुपि
११ शावच.
१२ जलाम्
१३ ( तत भागार्थवज्जस्य )
१४ अज्झेश्शतु.
१५ न नम्
१६ ङीग्योर्वादश्च
१७ शप्श्यात्
१८ जश्शसारिशः
१९ आङश्चौतो गी.
२० ङितो याट्
२१ टौस्येत्
२२ इदुतो गिग्यौतोऽम्ले·
२३ जस्येड्
२४ ङिरौत्
२५ न्यिशादाम्
२६ धेर्ङैरनाटि
२७ नास्तीट
२८ ङचेड्
२९ स्त्रिया वाट्
३० ग्योऽपुस
३१ वेणुवोऽस्त्रिया.
३२ नामाम
३३ नम् हृन्वान्साटः
३४ रष्णा सङ्रुणानाम्
३५ त्रेस्त्रय
३६ मोऽणोऽमः
३७ जराया ङसिन्द्रन्याचि
३८ धातोस्तत्कारकमस्तानेका-
चोऽसत्सयोगाद्यव्योः
३९ दृन्पुन करवर्षाभिर्भुव.
४० मत्स्येऽसुधीण
४१ भूहल्श्नोश्चेयुरौ
४२ स्त्रिया
४३ वाम्शागि
४४ दो मोऽस्यादसो मादुश्चापि-
न्यसन्
४५ वाऽद्रे
४६ गी बहुत्वे
४७ न्लुक् सुबाश्रये
४८ ( श्योऽलुचि )
४९ परे
५० +प्रौश्नो ण
५१ श्रुल्दुत्तौ नान्तरे
५२ धि घ्न
५३ ( पदेऽनाङ्यतद्धिते )
५४ अन्तसुभादीनाम्
५५ नृतेर्यङ.

+१ चिह्नितानि सूत्राणि प्रक्रियाप्रदर्शकाया निरूतानि

५६ अभिचे
५७ ( पुर्वपदस्थाद्वान्नमसुप )
५८ सकेकाचो
५९ ( क्तोऽपि )
६० +क्विजर प्पि
६१ +शर्नेम
६२ सिचो न यडि
६३ ( सुजस्स्यसनि )
६४ ( सेधतेर्गतौ )
६५ शास्वसिघसिसिक्तस्यासव् सातोऽवहुपदात्
६६ पढ कस्सि
६७ र पदान्ते विसर्जनीय
६८ धातोर्व्वोर्न्दीर्घोऽयहर्नि चाच्छुर्कुरो
६९ म्वोश्च मो नि
७० अनडुद्ध्युदुण्णिग्दिग्दर्स्पृग् दधृक्परिव्राट्
७१ ( नगा )
७२ सजूरहस्सोऽतिप्यक्रस्नन्सु ध्वन्सो रि
७३ सिपि दश्च वा
७४ र सुप्सि
७५ जलो जश्
७६ यशो भप् क्षपम्चोश्चैराच मत्यये
७७ धामो जन्ति च
७८ ( यडोऽन्येषाम् )
७९ ( धेस्तथ )
८० अघ
८१ इचो लिलुडा धो ढ
८२ वेड्भे
८३ ह
८४ दादेरेधादेर्घ
८५ नि म
८६ द्रुहमुहस्नुहस्निहो वा
८७ नहो ध
८८ चो कु
८९ युज्यञ्चिकुञ्च
९० व्रश्चभ्रस्जमृजमृजयजराजभ्राजच्छश प
९१ सयोगस्यादिस्कोर्लुह्
९२ पदन्य
९३ ( रात्स )
९४ ला
९५ न
९६ मान्तोपा तनयो मतोर्मो म
९७ ( नाम्नि )
९८ ( अष्ठीवच्चीवत्कक्षीवदमण्वद्रुमण्वत् )
९९ ( अन्ध्वी चोदवान् )
१०० राजवान् सुराजि
१०१ नोर्म्यादिभ्य
१०२ दघाश्नूनोऽपदस्यार

१०३ डातो डुः
१०४ स्यत्य उः
१०५ एडो लुक्
१०६ एदे
१०७ डित्यन्त्याजादेः
१०८ नः पथिमथ्यृभुक्षः
१०९ श्यनप्सुव्यन्
११० थो नद्
१११ आस्स्यनः
११२ द्योः
११३ अनडुहो नम्
११४ उगिदचोऽनेधादेः
११५ युजोऽसमासे
११६ पुंसो डस्
११७ ओत औ
११८ डाम्शसः
११९ ऋतसखीदुशनस्पुरुदंशोऽने-
हसस्सोः
१२० हल्ङचाब्दीर्घाल्लुक्
१२१ वोशनोशनस्नघोभगोभोस्स्व-
मश्चैकामन्त्रणे
१२२ ह्रस्वोऽक्लित्याटः
१२३ त्यचोऽस्वार्थस्य
१२४ एदाडः
१२५ ह्रस्वेतो लुचि चारेङ्
१२६ ( पुत्रेऽर्हे मातु कचोऽङ्)
१२७ वोऽनडुचतरो.
१२८ वाः
१२९ न डान्लुक्
१३० सखित ऐ च
१३१ क्रोष्टोः क्रोष्टृ
१३२ वाच्यापि
१३३ अप्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहो-
तृपोतृप्रशास्त्रदीर्घः
१३४ न्यस्
१३५ स्महतः
१३६ इन्हन्पूषार्यम्णश्शौ
१३७ सावतोश्च
१३८ असोऽनेधादेः
१३९ श्वे
१४० नाम्यतिसृचतुष्यः
१४१ नुर्वा
१४२ ( सख्याविसाय.दह्नस्याहन्-
डौ )
१४३ पद्नोमास्हृन्निशसन्यूषन्दो-
षन्यकन्शकन्नुदन्नासंश्चासुटि
१४४ पादोऽपदस्य म्युसुट्च्छि-
ण्यादौ पद्
१४५ कस उम्
१४६ श्चोऽचः
१४७ उद ई
१४८ श्वयुवन्मघोनां वस्येमुप्युश्
१४९ श्वोऽनोऽह्ल्वमात्
१५० डिम्योर्वा

१५१ आतोऽनाङः ङ्कुक्
१५२ दतिष्णां सङ्ख्यानां जश्शसः
१५३ अष्ट औश्
१५४ अव्ययस्य
१५५ अव्ययीभावस्य
१५६ नातः
१५७ अमपञ्चम्याः
१५८ तृतीयाया वा
१५९ सप्तम्याः
१६० (नधृद्धवंशस्य)
१६१ परस्परान्योऽन्येतरेतरस्यां सुपो वा पुंसि
१६२ भ्यस्याः
१६३ बह्वोसि स्येत्
१६४ ऐस् भिसोऽभशः
१६५ ङसास्येस्स्येनाद्यम्
१६६ सर्वादेर्ङ्स्ये स्मिन्स्मात्स्मै
१६७ जसश्शिः
१६८ नेमार्धप्रथमचरमाल्पकतिपयतयस्य वा
१६९ (द्वन्द्वे)
१७० न सर्वादिः
१७१ (पूर्वावर तृतीयायोगे)
१७२ नव पूर्वा वादौ
१७३ तीय ङिति
१७४ त्रिति च
१७५ इम्यादेरस्य
१७६ मामामः
१७७ युष्मदस्मद्भ्यामाकम्
१७८ ङश्शोभ्यसोऽभ्यम्
१७९ भ्योऽसोऽद्
१८० ङेसुटोऽम्
१८१ दोर्लुक्
१८२ (वा)
१८३ अमौद्धल्याः
१८४ यौसि य
१८५ मन्तस्य युवावौ द्वयो
१८६ त्वमौ प्रत्ययोत्तरपदे चैकस्मिन्
१८७ + त्वाहौ सौ
१८८ + यूयवयौ जसि
१८९ + तुभ्यमह्यं ङयि
१९० + तवममौ ङसि
१९१ पदाद्यान्त्यस्य वसौ सुविभक्ते
१९२ वानावौ द्वित्वे
१९३ तेमयावेकत्वे
१९४ त्वामौ द्वितीयायाः
१९५ नेवामन्त्र्य पूर्वम्
१९६ (जग्विशेष्य वाऽमन्त्र्ये)
१९७ (न)
१९८ पादाद्यो
१९९ मनसीक्षार्थैः
२०० चवाऽहहैवयोगे

२०१ नित्यमः वादेशे
२०२ (पदात् प्रथमाया वा)
२०३ त्यदां द्वितीयाटौस्येनदेतद.
२०४ इदमः
२०५ (स्भ्येऽश्)
२०६ अक्रः
२०७ टौस्यनः
२०८ दो मः
२०९ सौ
२१० पुंसीदोऽय्
२११ इय्
२१२ औस्सुलुक् चादसोऽनोः
२१३ वाकोऽस्योः
२१४ दस्सः
२१५ तोऽष्टानाम्
२१६ ससौ चात्
२१७ + किमः कः
२१८ भेऽपोऽद्
२१९ वाष्ण आः
२२० राय. भ्भि
२२१ त्रिचतुर. स्त्रियां तिसृचतसृ
२२२ (रोऽनपोऽच्युः)
२२३ (ङचौटि नीचो वा)

॥ इति शाकटायनीयसूत्रपाठे प्रथम स्याध्यायस्य द्वितीय पाद समाप्त ॥

१ क्रोष्टोर्

२ गुरूपोत्तमस्यानार्षेऽपत्येऽणिञः ष्यङ्
३ (गोत्रावयवे वृद्धे)
४ (रूढादिभ्यः)
५ (देवयज्ञशुचिवृक्षसत्यमुग्रकण्ठेविद्धाद्वा)
६ (तुल्याभोज्ये युवतिक्षत्रिये)
७ नृदुगिदच्नोऽस्वस्रादेर्ङी
८ (न ह्रपोऽनुर्वन.)
९ पादो वा
१० कुम्भपद्यादौ
११ + ऋच्याङ्
१२ मन्नन्बहुव्रीहेर्न च
१३ अजायताम्
१४ ठिट्टण्ढेञणञ्यौरादिभ्यः
१५ यञोऽपावटात्
१६ (यञ्यञलोहितादिशकलान्तकौरव्यासुरिमाण्डूकाद्रुफद्)
१७ वयस्यनन्त्ये
१८ (बहुव्रीहेस्संख्यादेर्हायनात्)
१९ (दाम्न)
२० ऊधः
२१ (अशिशोः)
२२ श्रवतो वा
२३ (नाम्नि)
२४ अनाच्छादनाज्जातेः पूर्वप-

दात् क्तादजनकृतमितप्रति-
पन्नात्
२५ पाणिगृहीतीति पत्नी
२६ बाऽस्वाङ्गात्
२७ असहनञ्विद्यमानान्नासिको
दरोष्ठजङ्घादन्तकर्णशृङ्गाङ्ग
गात्रकण्ठाबहुच्सयोगोपा
न्त्यात् स्वाङ्गात् समासात्
२८ (दीर्घजिह्वात् )
२९ ( पुच्छात् )
३० ( कबरमणिविषशरात् )
३१ ( पक्षाच्चोपमानात् )
३२ ( न नखमुखात्नाम्नि )
३३ ( क्रोडादिभ्य )
३४ ( करणात् क्रीतात् )
३५ ( क्तादल्पे )
३६ द्विगो
३७ ( परिमाणादेव लुचोऽवि
स्ताचितकम्बल्यात् )
३८ ( काण्डात्क्षेत्रे )
३९ ( पुरुषात् प्रमाणाद्वा )
४० न पत्यन्तस्य
४१ सपत्न्यादौ
४२ पतिवत्न्यन्तर्वत्न्यावविधवा
गर्भिण्यो
४३ रोहिणरेवताऽक्षत्रे
४४ नीलात् प्राण्योषध्यो

४५ ( नाम्नि क्ताच्च वा )
४६ ( केवलमामकभागधेयपापा-
परसमानार्यकृतसुमङ्गलभेष
जात् )
४७ ( कुण्डमाजगोणस्थलनाग
कुशकामुककटकबरात् पात्र
श्राणावपनाकृत्रिमस्थूलायस-
मैथुनेच्छुश्रोणिकेशवेशे )
४८ आर्यक्षत्रियाद्वान्
४९ धवाद्योगादज्येष्ठादिभ्य
५० पूतक्रत्वग्निवृषाकपिकुसित-
कुसीदादैङ् च
५१ मनोर्ना ङैच्
५२ मातुलाचार्योपाध्यायादान् च
५३ वरुणेन्द्रमृडभवशर्वरुद्रादान्
५४ ( सूर्याद्देवतायाम् )
५५ आङ्
५६ ( यवनयवाल्लिपिदुष्टे )
५७ हिमारण्यादुरौ
५८ वेदात्तिनो ङी
५९ गुणादुतोऽच्चोऽखरो
६० ( चन्द्रभागान्नद्याम् )
६१ बह्वादे
६२ ( शोणश्येतैतहरितभरतरो
हिताद्वर्णात्तो नश्च )
६३ क्रोऽसितपलितात्
६४ कालशबलसारङ्गपिशङ्गपिङ्ग

१०९ ( वोपसर्गात् )
११० पणव्यवह्रो.
१११ स्मृत्यर्थदयीशां कर्म
११२ कृञः प्रतियत्ने
११३ ( रुजोऽज्वरिसंताप्योः कर्तरिभावे )
११४ हिंसाया जासनाटक्राथपि-पानिप्रग्राम्
११५ आशिषि नाथः
११६ ( वृश्यभिवाचोर्णस्ताडि )
११७ ( अकर्मकात् )
११८ ( नित्यकर्ममभिज्ञाघर्थश ब्दकर्मदृशोऽस्वादादिकन्दश-ब्दायह्वः
११९ ( भक्षेर्हिसायाम् )
१२० ( वहे. प्रवेयम् )
१२१ ह्वक्रोर्वा
१२२ शीङ्स्थासोऽधेराधार.
१२३ वसोऽनूपाध्याङ.
१२४ अभिनिविशश्च
१२५ कालाध्वभावदेशं वा कर्म चाकर्मणाम्
१२६ कालाध्वनोर्व्याप्तौ
१२७ टाभ्याभिस्सिद्धौ
१२८ हेतुकर्तृकरणेत्थभूतलक्षणे
१२९ सहार्थेन
१३० यद्भेदैस्तद्वदाख्या
१३१ ( काले भाद्वाधारे )
१३२ प्रसितावबद्धोत्सुकैः
१३३ + समो ज्ञोऽस्मृतौ चाप्ये
१३४ + दाणाधर्मे तङ् च देयेः
१३५ ङे भ्यां भ्यस्
१३६ स्थानिवुणः
१३७ क्रुद्द्रुहेर्ष्यासूयार्थैर्यं प्रति कोपो न च कर्म
१३८ क्रुद्द्रुहाश्चोपसर्गात्
१३९ स्पृहेर्वा
१४० मन्यस्याकाकादिषु यतोऽव-ज्ञा
१४१ भद्रायुष्यक्षेमसुखार्थहितार्थ-हितैराशिषि
१४२ शक्तार्थवषड्नमस्स्वस्तिस्वा-हास्वधाहितैः
१४३ रुचिक्लृप्यर्थधारिभि प्रेय-विकारोत्तमर्णेषु
१४४ ( प्रत्याङ श्रुवाम्यर्थके )
१४५ ( प्रत्यनोर्गृणाख्यातरि )
१४६ ( राधीक्षौ यद्वैवे )
१४७ उत्पातेन ज्ञाप्ये
१४८ श्लाघह्नुङ्स्थाशपा प्रयोज्ये
१४९ गत्यादिभिर्नहुलम्
१५० यदर्थम्
१५१ परिक्रये करणे वा
१५२ ङसिभ्याम्यस्स्तोकाल्पकति·

पयक्कुच्छ्रादसत्त्वे
१५३ आरार्थे
१५४ हेतौ गुणेऽस्त्रियाम्
१५५ ऋणे
१५६ अपायेऽवधौ
१५७ आख्यातर्युपयोगे
१५८ आङा
१५९ वर्ज्येऽपपरिणा
१६० प्रतिनिधिप्रतिदाने प्रतिना
१६१ स्थानिन्यकर्माधारे
१६२ दिक्चछब्दान्यार्थाराद्बहिरि तरै
१६३ ङसोसाम्
१६४ स्ताचा
१६५ करणे ज्ञोऽज्ञाने
१६६ कृत्कासुकस्याव्युणूलक्तण्-रार्थाव्ययैप्यदणेन कर्मक-र्त्रो
१६७ क्तस्य सदाधारे
१६८ ( वानाकस्य कथञ्चिद्गमासे-कर्तरि )
१६९ ( कर्मणि गुणे )
१७० ( न ध्यप )
१७१ क्तेनो ङ्योस्सुप्
१७२ हेतौ कर्मणा
१७३ (साधुनिपुणेनार्चायाम्)
१७४ स्वेशेऽधिना
१७५ (उपेनाधिकिनि)
१७६ आधारे
१७७ सुजर्थे काले वा
१७८ ( कुशलायुक्तेनासेवायाम् )
१७९ +स्वामीश्वराधिपतिदायाद-साक्षिप्रतिभूप्रसूतैश्च
१८० यद्भावो भावलक्षणम्
१८१ त्र्यंत्र्यी विभक्ति
१८२ प्रथमादि
१८३ +षष्ठी चानादरे
१८४ (गते स्थानिन्यध्वान्तेनैक)
१८५ (सप्तमी)
१८६ कारकमध्येऽध्वकाले पञ्चमी च
१८७ चेष्टागत्याप्येऽनाक्रान्ते द्वि-तीयाचतुर्थ्यौ
१८८ तुल्यार्थैस्तृतीया
१८९ षष्ठी
१९० द्वितीया चैनेनानञ्चे
१९१ पञ्चमी चर्ते
१९२ पृथग्नाना तृतीया च
१९३ विनेमास्तिस्र
१९४ सप्तमी चासत्त्वारादर्थात्
१९५ हेतौ हेत्वर्थे सर्वा. प्रायः

॥ इति शाकटायनीयसूत्रपाठे प्रथम-स्याध्यायस्य तृतीय पद समाप्त ॥

१ लोऽन्ययुष्मदस्मात्तु तिप्‌-
भिस्सिप्थस्थमिब्वस्मः
२ तातांझथासाथांध्वमिल्वहि-
महिट्टिदिच्छीयसश्णव-
स्कृनिविशः
३ ऋग्रतोरोपसर्गात्,
४ युजोऽयुवः -
५ (न यज्ञे तत्पात्रे)
६ परिव्यवात् क्रिय,
७ परावेर्जेः
८ ( कर्मण्योदश्वरः )
९ समस्तृतीयया
१० क्रीडोऽकूजे
११ पर्यन्वाङः
१२ शपनाथशिक्षभुजादुपलम्भ-
नाशीर्जिज्ञासात्राणे
१३ हृञो गतिताच्छील्ये
१४ न्यस्सम्माननाचार्यकभृत्युत्स-
ज्ञनज्ञानव्ययविगणने
१५ ( कर्तृस्थेऽतनाप्ये )
१६ क्रियतेर्लुङ्लिङ्लङेः
१७ क्यपो वा
१८ लो· कृप.
१९ द्युभ्योलुङः
२०वृभ्यस्सस्यात्
२१ क्रमोऽनुपसर्गात्
२२ वृत्तिसर्गतायने,
२३ परोपात्
२४ वेः पदविक्षेपे
२५ प्रोपाभ्यां समर्थाभ्याम्
२६ ज्योतिरुद्गतावाङ.
२७ नुप्रश्नप्रच्छ.
२८ गमेऽ प्रतीक्षायाम्
२९ ह्वस्स्पर्धे
३० सनिवेः
३१ उपात्
३२ यमोऽविवाहे
३३ स्थ. पथिमैत्रीदेवार्चासङ्गम-
मन्त्रकरणे
३४ लिप्सौ वा
३५ उदोऽनूर्ध्वेहे
३६ सनिशवात्
३७ स्थेयप्रकाशने
३८ प्रतिज्ञाने
३९ समो गिरात्
४० अवात्
४१ समतेर्ज्ञोऽस्मृतौ
४२ निह्नवे
४३ सनोऽननोः
४४ श्रुवोऽप्रत्याङः
४५ स्मृदृशः
४६ प्राग्वत्
४७ आम. कृञः
४८ न

४९ गन्धनावक्षेपसेवासाहसप्रति
यत्नप्रकथनोपयोगेषु कृञः
५० प्रसहनेऽधेः
५१ दीप्तिज्ञानयत्नविमत्युपसम्भा
षोपमन्त्रणे वदः
५२ व्यक्तवाचां सहोक्तौ
५३ विप्रलापे वा
५४ कर्मण्यसंज्ञने
५५ ज्ञोऽस्य
५६ समोऽर्तिस्वरतिश्रुदृशिङ्म्भ
च्छर्वद्भ्यः
५७ ( वेः कृञः शब्दे चानादौ )
५८ यङ्य स्वेऽङ्गे चाङ्
५९ व्युदस्तपः
६० न प्राणिन्यणिज्ञो णिजन्तस्य
६१ ( अनात्मन्यनाध्याने )
६२ भीस्मियोः पाकारे
६३ गृधिवञ्च्योर्विप्रलम्भे
६४ ( मिथ्या कृञोऽभ्यासे )
६५ धेट्पाट्मायमायस्परिमुहरु-
चिनृतिवदवस्यवल्यर्थेड्
प्रदुस्तुवुधयुधनशजन
फलेशे पदाद्वते तु वा
६६ भीदिदपवदानुपसर्गाज्ञ
६७ यमस्समुदाङोऽग्रन्थे
६८ न पर्याङ्भ्वे रमः
६९ उपात्
७० वाऽकर्मकात्
७१ व्याङ्परिभ्योऽपराङ्गे
७२ परानो कृञः
७३ प्रत्यभ्यतिक्षिपः
७४ पादुङ्
७५ परेर्मृषेश्च
७६ व्यतिहृतेऽगतिहिंसाशब्दे
ह्वनहश्चापरस्परान्योन्येतरेतरे
७७ कर्ममात्रे
७८ ( मादृलटश्शापेऽतङ्तङ्न-
च्छन्नातशौ )
७९ सलङ्स्वर्यच्छ्टो चानितौ
८० लिट कसुकानौ
८१ क्त्रिण्वसदोऽनुवचश्च
कर्तरि भूते
८२ अनाश्वान्
८३ दयायास्कासुर्विजायने का-
चोऽनृच्छूर्णोराम् कृम्वस्लिट्
चानु
८४ जागुपसमिन्धो वा
८५ भीह्रीभृहोश्लुवत्
८६ विदात् कित्
८७ लेट कृलेट्
८८ +शीोऽन्त
८९ व्युक्तिजक्षपञ्चतोऽत्
९० तद्दोऽन्त
९१ शीङो रन्

९२ येचेर्वा
९३ ए टित
९४ यद्यामो गेश्
९५ +थासस्से
९६ लोराङ्ङाङ्गारौरस्
९७ झे
९८ लिटस्तझस्यैशिरे
९९ णमेरौशात
१०० मिपोऽश्
१०१ अतङाण्णशतुसुस्थाधुस
ष्णश्चमा
१०२ +विदो लटो वा
१०३ शतु क्सु
१०४ ब्रुवस्तिप्पञ्चतो णश्पञ्च
द्रुश्चाह
१०५ एदिंतो लुक्
१०६ आङ्पिो झेर्जुसवा
१०७ सिविदज्झेरभ्व
१०८ ह्रेले
१०९ ङचाद्रुक्यासद्
११० रत्नो झेलो
१११ टीप्
११२ सट् र्थाया ल्टि
११३ तसस्सयस्मस्मेस्तान्ततवमा
ल्टश्च
११४ सीप्येर्युन्याम्
११५ म्येगादिष्टाप्
११६ एतोऽगैप्
११७ स्वो वाम्
११८ मृशादौ हि
११९ (यस्य वा)
१२० (घ्वेस्त्व)
१२१ (तङ)
१२२ सुद्योस्ताद्वाशिषि
१२३ हि चाप्

॥ इति शाकटायनीयसूत्रपाठे प्रथम
स्याध्यायस्य चतुर्थ पाद ॥

## समासोऽध्यायश्च प्रथमः ॥

१ ( सुप्सुपा समासो बहुलम्)
२ सुज्यार्थे सख्या सख्यया
सख्येये बहुव्रीहि
३ ( आसन्नादूराधिकाध्यर्धार्धा
दिङद्वितीयाद्यन्यार्थ )
४ अव्ययम्
५ एकार्थं च
६ मिथोग्रहणे प्रहरणे च स
रूप युद्धेऽव्ययीभाव
७ ( नदीभिर्नाम्नि )
८ ( सख्यावंश्येश्च पूर्वपदार्थे )
९ पारे मध्येऽन्तष्षष्ठ्या
१० यावदवधारणे
११ वहि पर्यपाद्
१२ लक्षणेनाभिप्रत्याभिमुख्ये

१३ दैर्घ्येऽनुः
१४ समीपे
१५ ( तिष्ठद्ग्वादयः )
१६ नित्यं प्रतिनाऽल्पे
१७ ( परिणाऽक्षशलाकासंख्यं द्यूते जये )
१८ शब्दप्रधासम्पत्समृद्धिव्यृध्यर्थाभावात्ययासम्प्रतिसुप्पश्चाद्युगपद्यथासदृक्साकल्यान्तेऽव्ययम्
१९ यथाथा.
२० तिष्ठत्स्वत्याङ्कन्यस्तत्पुरुषः
२१ गतादिषु प्रादयः
२२ स्वकृतास्युक्तम्
२३ ( टा )
२४ नञ्
२५ पूर्वापराधरोत्तरमेकदेशिनाभिन्नेन
२६ समेऽर्धम्
२७ ( द्वित्रिचतुर्ष्वा )
२८ ( काले द्विगौ च मेयैः )
२९ स्वयं सामि क्तेन
३० ( द्वितीया खट्वा क्षेपे )
३१ ( कालः )
३२ व्याप्तौ
३३ श्रितादिभिः
३४ ( प्राप्तापन्न तया च )
३५ ईषद्गुणवचनैः
३६ तृतीया तत्कृतैः
३७ साधनं कृता
३८ ( पूर्वाद्यूनार्थैः )
३९ चतुर्थी प्रकृतिस्वार्थार्थादिभिः
४० तयालम्
४१ पञ्चमी भयादिभिः
४२ ( क्तेनासत्त्वे )
४३ पष्ठ्ययत्नात्
४४ याजकादिभिः
४५ ( पत्तिरथं गणकेन )
४६ ( वुनाजीवे )
४७ न कर्तरि
४८ कर्मणि वा च
४९ ( तृतीयायाम् )
५० तृप्तार्थाव्ययनिर्धार्यैडच्छत्रानशमतिपूजाधारक्तैः
५१ ( गुणैरस्वस्थैः )
५२ सप्तमी शौण्डादिभिः
५३ ( नाम्नि )
५४ ( व्यपावस्यके )
५५ ( तत्राहोरात्राश क्तेन )
५६ ( काकादिभिश्च क्षेपे )
५७ पात्रेसमितादय.
५८ विशेषण व्यभिचार्येकार्थं कर्मधारयश्च
५९ ( पूर्वकालैकसर्वजरत्पुराण-

नवकेवलम् )
६० (दिगधिकं संज्ञातद्धितोत्तरपदे)
६१ संख्या समाहारे च द्विगुश्चानाम्न्ययम्
६२ निन्धोऽपापाणकेन
६३ गौणस्तेन
६४ व्याघ्रादिभिर्गौणैस्तदनुक्तौ
६५ (पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीरम्)
६६ (श्रेण्यादि कृतादिभिश्च्वौ)
६७ (क्तनञादिभिर्नै )
६८ (नानिटेट्)
६९ (सन्महत्परमोत्तमोत्कृष्टं पूजायाम्)
७० वृन्दारकनागकुञ्जरैः
७१ (कतरकतम जातिप्रश्ने)
७२ +किं क्षेपे
७३ पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यायकधूर्तप्रसंसारूढैर्जातिः
७४ (चतुष्पाद्गर्भिण्या)
७५(खलतिजरत्पलितवलिनैर्युवा)
७६ (घ्यप्तुल्याख्यमजात्या)
७७ (वर्णैर्वर्णे )
७८ कुमार श्रमणादिना
७९ मयूरव्यंसकादयः
८० द्वन्द्वस्सहोक्तौ
८१ (समानामेक )
८२ (सुप्यसख्येय )
८३ त्यदादि·
८४ (भ्रातृपुत्रास्स्वसृदुहितृभि )
८५ पिता मात्रा वा
८६ (श्वशुरः श्वश्र्वा)
८७ वृद्धो यूनान्यार्थप्रकृतौ
८८ (पुरुष )
८९ (स्त्रिया)
९० (ग्राम्याद्विखुरसपेऽशिशौ स्त्री प्राय )
९१ (नपुसकमन्येनैक च वा)
९२ (पुष्यार्थात् पुनर्वसुर्ज्योतिषि
९३ द्वन्द्वो वा
९४ (विरोध्यद्रव्यमभेदे)
९५ (अश्ववडवपूर्वापराधरोत्तरा )
९६ (पशुव्यञ्जनानि)
९७ (तरुतृणधान्यमृगपक्षिबहुर्थाश्च )
९८ सेनाङ्गक्षुद्रजन्तु
९९ फल जाति
१०० (शेषोऽप्राणी)
१०१ प्राणितूर्याङ्गम्
१०२ (चरण स्थेणो लुङ्यनुवादे)
१०३ (नित्यवैरा वैरे)

१०४ (पात्र्यशूद्रानपुंसकाध्वर्युकत्व-
धीत्यासन्नाविलिङ्गनदीपूर्वेदश-
गवाश्वादि)
१०५ न दधिपयआदिः
१०६ (संख्याने)
१०७ (याऽन्तिके)
१०८ सूक्तं पूर्वम्
१०९ (राजदन्तादौ)
११० विशेषणसर्वादिसंख्यं बहु-
व्रीहौ
१११ (क्ताः)
११२ (कालाकृतिसुखादिभ्यो वा)
११३ (प्रहरणात् सप्तमी च )
११४ (गड्वादिभ्यः)
११५ (भार्योढादिषु)
११६ (प्रियः)
११७ (कडारादयः कर्मधारये)
११८ (धर्मार्थादिषु द्वन्द्वे)
११९ लघ्वच्जाद्यदल्पाजर्च्यमेकम्
१२० वर्णभ्रातनुपूर्वम्
१२१ (मर्त्यैकसंख्यात्)
१२२ सङ्ख्याल्पा समासे
१२३ न्यग्रोप्यतोऽनंशीयोबहुव्री-
हेर्ह्रस्वः
१२४ (अन्तः)
१२५ (न नञः)
१२६ +किमः क्षेपे
१२७ प्राक् टात् स्वतेः पूजायाम्
१२८ (बहोर्डे)
१२९ (कन् नाम्नि)
१३० ईयसः
१३१ (सहात्तुल्ये)
१३२ (भ्रातुस्तुल्यौ)
१३३ (नाडीतन्त्र्यास्स्वाङ्गे)
१३४ (निष्प्रवाणिः)
१३५ इज्युद्धे
१३६ (द्विदण्ड्यादिः)
१३७ तोऽपङक्षाशितंगवलंकर्मा-
लंपुरुषात्
१३८ (वाऽक्ष्णोऽदिक्स्त्रियाम्)
१३९ ऋक्पूःपथ्यपोऽत्
१४० धुरोऽनक्षस्य
१४१ (संख्योदकूपाण्डुकृष्णाद्भूमेः)
१४२ उपसर्गादध्वनः
१४३ प्रत्यन्ववात् सामलोम्नः
१४४ प्रतेरुरसस्सप्तम्याः
१४५ समवान्धात्तमसः
१४६ (तप्तान्ववाद्रहसः)
१४७ ब्रह्महस्तिराजपल्याद्वर्चसः
१४८ (अक्ष्णोऽप्राण्यङ्गे)
१४९ (संकटाभ्याम्)
१५० (प्रत्यनोरव्ययीभावात्)
१५१ (शरदादेः)
१५२ जराया डश्च

१५३ अनः
१५४ नपुंसकाद्वा
१५५ गिरिनदीपौर्णमास्याग्रहायणीजयः
१५६ (संख्याया नदीगोदावर्याः)
१५७ सरजसोपशुनाऽनुगवम्
१५८ जातमहद्वृद्धादुक्षणः कर्मधारयात्
१५९ स्त्रियाः पुंसो द्वंद्वाच
१६० धेन्वनडुहर्यजुषाहोरात्रनक्तदिवरात्रिंदिवाहर्दिवोर्वष्ठीवपदष्ठीवाक्षिभ्रुवदारगवम्
१६१ (चुदषहस्समाहारे)
१६२ द्विगोरन्होऽट्
१६३ (द्विनेरायुष.)
१६४ (अञ्जलेश्चालुचः)
१६५ (खार्या वा)
१६६ +(अर्धाच्च)
१६७ नावः
१६८ गोस्तत्पुरुषात्
१६९ राजन्सखे.
१७० (ग्रामकौटात्तक्ष्ण)
१७१ (राष्ट्राख्यात् ब्रह्मणः)
१७२ (कुमहतो वा)
१७३ (शुनोऽतेः)
१७४ (गौणात्)
१७५ (अप्राणिनि)
१७६ (सृगोत्तरपूर्वाच्च सक्थ्न.)
१७७ (सरोऽनोऽश्मायसो जातिनाम्नोः)
१७८ (उरसोऽग्रे)
१७९ अह्नः
१८० (सङ्ख्यातात्वाह्नश्च)
१८१ सङ्ख्याव्ययसर्वांशात्
१८२ पुण्यवर्षादीर्घसङ्ख्यातैकाच्चाद्रात्रेः
१८३ (श्वश्श्रेयसश्वोवसीयसनिश्श्रेयसपुरुषायुषगोष्ठश्वद्विस्तावात्रिस्तावा )
१८४ (नञव्ययात् संख्याया डः)
१८५ संख्याव्ययादङ्गुले.
१८६ (बहुव्रीहेः काष्ठे टः)
१८७ (सक्थ्यक्ष्णस्स्वाङ्गे)
१८८ (द्वित्रेर्मूर्ध्नो वा)
१८९ प्रमाणीसंख्याड्डः
१९० (त्रिचतुरोपचतुराचतुरविचतुरसुचतुरसुप्रातसुश्वसुदिवैणीपदाजपदप्रोष्ठपदचतुरश्रशारिकुक्षा )
१९१ (प्रधानस्त्रीडन्द्वचोऽप्)
१९२ (अन्तर्बहिर्भ्यां लोम्नः)
१९३ (नञ्बहोर्ऋचो माणवचरणे)
१९४ (भालेतुः)
१९५ (नाभेर्नाम्नि)

१९६ (नञ्दुस्सोः सक्थिहलेर्वा)
१९७ अस् प्रजायाः
१९८ (अल्पाच्च मेधायाः)
१९९ धर्मादन् द्विपदात्
२०० (सुहरिततृणसोमाज्जम्भात्)
२०१ (लुब्धेन दक्षिणेर्मा)
२०२ जातेश्च्छन्दस्सामान्यवति
२०३ (भृतिप्रत्ययान्मासात्)
२०४ सूत्पूतिसुरभेर्गन्धादिद्गुणे
२०५ वाल्पे
२०६ योपमानात्
२०७ सुसङ्ख्याद्याहस्त्यादेः पादस्य लुक्
२०८ (वयसि दन्तस्य दतृ)
२०९ (स्त्रियां नाम्नि)
२१० (श्यावारोकाद्वा)
२११ (अग्रान्तशुद्धशुभ्रवृषवराहा-हिमूषिकात्)
२१२ (पूर्णाच्चकाकुदस्य)
२१३ (व्युद)
२१४ (त्रेः ककुदस्याद्रौ)
२१५ (अवस्थायाम्)
२१६ जायाया जानिः
२१७ (धनुर्नाम्नि)
२१८ (खरखुरान्नस् नासिकायाः)
२१९ (नसोऽस्थूलाच्च)
२२० (उपसर्गात्)
२२१ (वेः खुग्रग्रौ)
२२२ (सम्प्राज्ज्ञानोर्ज्ञुजौ)
२२३ वोर्ध्वात्
२२४ (सुहृद्दुर्हृन् मित्रामित्रे)
२२५ (स्त्रियामूधसो नङ्)
२२६ इन कच्
२२७ उरःप्रभृत्यनित्यात्
२२८ नञोऽर्थात्
२२९ शेषात् सिद्धनन्दिनः

॥ इति शाकटायनीयसूत्रपाठे द्वितीय-स्याध्यायस्य प्रथमः पादः ॥

१ प्रत्ययस्य च सुपश्लुक्
२ (नोत्तरपदेऽसत्त्वे)
३ (स्त्रीत्व एकाचोऽम्)
४ ओजोऽञ्जस्सहोऽम्भस्तपस्तः
५ (इत्यात्मनः)
६ (मनस आज्ञायिनि)
७ (नाम्नि)
८ डेर्व्याकरणे
९ (हलदन्तसप्तम्याः)
१० (कारे प्राचां हलि)
११ (मध्यान्ताद्गुरौ)
१२ अकामेऽमूर्धमस्तकात् स्वाङ्गात्)
१३ (बन्धे घञि वा)
१४ नतत्पुरुषे कृति बहुलम्

१५ ययोनिमतिचरजेऽप
१६ (द्युप्रावृड्वर्षाशरत्कालाज्जे)
१७ (क्षरवरशरवर्षोद्धा)
१८ (शयवासिवासेऽकालात्)
१९ (कालाद् छतनट् काले)
२० (नेन् सिद्धस्थे)
२१ ब्राह्मणाच्छसिपुंसानुजजनुपान्थगोपुचरदिवोदासदेवानाम्प्रिया
२२ +(षष्ठ्या आक्रोशे)
२३ (पुत्रे वा)
२४ वाग्दिक्पश्यतो युक्तिदण्डहरे
२५ (शेफपुच्छलाङ्गूलेषु नाम्नि शुनः)
२६ गोष्पद सेवितप्रमाणे
२७ (असेवितेऽगोष्पदम्)
२८ (ऋता विद्यायोनिसम्बन्धे)
२९ स्वसृपत्योर्वा
३० मातरपितरं द्वन्द्वे वा
३१ आङ्
३२ (पुत्रे)
३३ इन्द्रासोमादिषु देवतानाम्
३४ ( षोमवरुणेऽग्नेरी )
३५ ( नात्यविष्ण्वन्द्रे )
३६ ( उषासोषस )
३७ ( दिवो द्यावा )
३८ ( दिवस् पृथिव्या वा )
३९ ( वर्चस्कादिष्ववस्करादय )
४० (सर्वादिस्सर्वोऽसुपि पुमान्)
४१ मानिस्त्र्येकार्थयोस्त्र्यन्यतोऽनू
४२ पिति तद्धित
४३ ( जातिश्च ण्यञ्यि )
४४ ( ढेऽग्नि )
४५ ( गुणस्त्वते )
४६ ( बह्वल्पार्थश्शसि )
४७ ( मृगक्षीरादिषु )
४८ ( नाजारैत्तद्धितोऽरक्तविकारेऽरिस्स्वार्थे )
४९ ( ङद्रुतद्धितकोपान्त्याख्या )
५० ( स्वाङ्गेज्जातिश्चामानिनि )
५१ ( प्रियादौ )
५२ ( रूपकल्पङ्गोत्रमतहतचेलड्ब्रुवे ऋूत्स्वश्च वोगित. )
५३ ( ङ्यांऽनेकाच )
५४ ( भोगवद्गौरिमतोर्नाम्नि )
५५ ( नित्याटो वा )
५६ ( मास्पाकमास्पचने )
५७ ( दगर्थेऽन्यस्यापष्ठीतृतीयस्य )
५८ ( रागोत्सुकाश्थितोत्याशास्याशिषि )
५९ ( छकारके )

६० नञोऽश्
६१ ( तिङि क्षेपे)
६२ ( एकादश्वाङ्गौ )
६३ ( वागोऽप्राणिनि )
६४ अशोऽचि नट्
६५ ( विष्वग्देवसर्वादेर्डेद्रिगञ्चि क्वौ )
६६ सम्सहस्य समिसध्रि
६७ तिरसस्तिर्ये
६८ लुब्यप्यवश्यमः
६९ तुमो मनस्कामे
७० ( समः )
७१ ( हिततते वा )
७२ कृदन्ते वा मम् रात्रेः
७३ सत्यागदास्तोः कारे
७४ भ्राष्ट्राग्न्योरिन्धे
७५ ( भद्रोष्णयोः करणे )
७६ ( लोकंपृणमध्यंदिनानभ्याशमित्यधेनुंमव्याः )
७७ ( गिलगिलगिलयोरचोऽगिलस्य )
७८ खित्यरुर्द्विषतश्चानव्ययस्य
७९ ह्रस्वः
८० मालेषीकेष्टकस्यान्तस्य च भारितूलचिते
८१ भ्रुवोऽच्च कुटिकुंसे
८२ (वेकोऽनीगुङीयुव्यञः)
८३ (ङ्याङो बहुलं नाम्नि )
८४ (त्वे)
८५ (शुनो दीर्घः)
८६ (चले)
८७ आदिजन्ते
८८ घञ्युपसर्गस्य च
८९ (काशचीकः)
९० नहिवृतिवृषिव्यधिसहितनिरुचि क्वौ तिकारकस्य
९१ (चितेः कचि)
९२ (स्वचिह्नस्याविष्टाष्टपञ्चभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य कर्णे)
९३ (हविर्युक्तेऽप्नः कपालगवे)
९४ (नाम्नि)
९५ (कोटराञ्जनादीनां वनगिरौ)
९६ (बह्वच्शरादीनां मत्यनजिरादेः)
९७ (वहेऽपील्वादीकः)
९८ (विश्वस्य नरे)
९९ (ऋषौ मित्रे)
१०० (वसुराटोः)
१०१ एकादश षोडश षोडन् षोढा षड्ढा
१०२ द्व्यष्टत्रयोऽनशीतौ प्राक् शतादबहुव्रीहौ
१०३ चत्वारिंशदादौ वा

१०४ महतः करघासविशिष्टे डा.
१०५ (ट्च.)
१०६ जातीयैकार्थे
१०७ आ यद्दृग्दृशदृक्षे
१०८ किमिदम. कीश्
१०९ सस्समानस्य धर्मादिषु च
११० (सब्रह्मचारी)
१११ सहस्याकालेऽव्ययीभावे
११२ (ग्रन्थान्ताख्याधिक्याद्दृश्ये)
११३ वान्यार्थे
११४ (नाशिष्यगोवत्सहले)
११५ (बन्धौ प्यस्येश्)
११६ (मातमातृमातृके वा)
११७ (पुत्रपत्योस्तत्पुरुषे)
११८ को कदचि
११९ (रथवदेषु)
१२० (कति)
१२१ पुरुषे का वा
१२२ (अल्पे)
१२३ पथ्यक्षयोः
१२४ काकवौ वोष्णे
१२५ (नस् नासिकायास्तस् क्षुद्रे)
१२६ (येऽवर्णे)
१२७ हृदयस्य हृयाण्लासे
१२८ (लेखे)
१२९ (पदः पादस्याज्यातिगोपहते)
१३० (पत् कार्षिहिमहतिये)
१३१ (शस्पृच·)
१३२ (मिश्रशब्दघोषनिष्के वा)
१३३ (पूर्ये एकहल्युदकस्योद् )
१३४ (मन्थौदनसक्तुबिन्दुवज्रवी-
वधभारहारगाहे)
१३५ (धिपेषवासवाहने)
१३६ नाम्न्युत्तरपदस्य च
१३७ क्षुग्वा
१३८ (द्यन्तरुपसर्गादीदपोऽनात्)
१३९ (देशेऽनोरु )
१४० (दिक्शब्दात्तीरस्य तारो वा)
१४१ मातुपितुस्स्वसुष्पि
१४२ उः
१४३ (विकुशामिपरेष्षल)
१४४ (कपेर्गोत्रे)
१४५ गोऽम्बाम्बसव्यापद्वित्रिभूम्य-
ग्निमञ्जिपुञ्जिशेकुशङ्कुक-
ङ्गुबर्हिर्दिविपरमेष्ठ
१४६ प्रष्ठोऽग्रगामी
१४७ +(ज्योतिरायुष्ष्टोम )
१४८ (पुचाग्नेः)
१४९ (निर्दुस्सो सेधसन्धिसामाम)
१५० (भीरुष्ठानादिषु)
१५१ (निनद्यास्स्नातेः कौशले)
१५२ (प्रतेष्ष्णात सूत्रे)
१५३ (ष्णान नाम्नि)
१५४ (विष्टराभिनिष्टानं छन्दोवर्णे

१५५ (वृक्षासन विष्टरः)
१५६ (शुचिगवेष्टिरः)
१५७ (प्लवग.)
१५८ (भाद्रा)
१५९ (णोऽपे·)
१६० (पुरगामिश्रकासिप्रकाशारिकाकोटराद्वणम्)
१६१ (प्राग्रेऽन्तर्निश्शराम्रसादिरकार्ष्यपीयूक्षेक्षुप्लक्षात्)
१६२ (द्विन्त्र्यभ्योऽनिरिकादिभ्यो वृक्षौषधादिभ्यो वा)
१६३ (गिरिनद्यादीनाम्)
१६४ (पाणं भावकरणे)
१६५ (देशे)
१६६ ग्रामाग्राण्णीः
१६७ (णसः)
१६८ (अतोऽह्न)
१६९ (वयसि चतुस्त्रेर्हायण)
१७० (वाग्राह्णहणम्)
१७१ स्फोऽनन्नः प्यः
१७२ पृषोदरादयः

॥ इति शाकटायनीय सूत्रपाठे द्वितीयस्याध्यायस्य द्वितीयः पादः ॥

१ संभ्रमेऽसकृत्
२भृशाभीक्ष्ण्याविच्छेदे प्राग् द्वि
३ (नानावधारणानुपूर्व्याधिक्ये)-
४ (उत्तरडतमौ समानां स्त्रीभावे)
५ (पूर्वप्रथमावन्यतोऽतिशये)
६ प्रोपोदम पादपूरणे,
७ सामीप्येऽधोऽध्युपरि
८ वीप्सायाम्
९ (एकलुक् चैकस्यादौ सुपः)
१० द्वंद्वं वा
११ (मर्यादोक्तिव्युत्क्रान्तियज्ञपात्रप्रयोगरहस्ये)
१२ (लोकज्ञातेऽत्यन्तसाहचर्ये)
१३ (आबाधे)
१४ (रिद्गुणः सदृशे वा)
१५ (प्रियसुखे चाकृच्छ्रे)
१६ (वाक्यस्य परिवर्जने)
१७ [आयामन्त्र्य सम्मत्यसूयाकोपेऽस्वन्त्यस्य प्लुतः]
१८ (भर्त्सनेऽन्यतरस्याम्)
१९ (तिङोऽपेक्षस्यान्तेन)
२० (क्षियाशीःप्रैषे)
२१ ओमः प्रारम्भे
२२ (प्रतिश्रवणनिगृह्यानुयोगे)
२३ (चितीवे)
२४ (पूर्वस्य विचारे)
२५ (हेः प्रश्नाख्याने)
२६ (प्रश्ने च प्रतिपदम्)
२७ दूराद्यामन्त्र्यस्य गुरुर्वैको

लनृत्
२८ ( हेहैष्वेषामेव )
२९ ( मोश्च प्रत्यभिवादे चास्त्री-शूद्रे )
३० ( पूजाविचारप्रश्ने चादिदु-स्वरः सन्धेयस्यैचः )
३१ छषढसफ प्रत्ययस्येयियेयी-नायन्
३२ इक् ठः
३३ दोसिसुसुगशश्वदकस्मात्तः कः
३४ वोरकः
३५ लुब्व्योर्वस्कौ
३६ ओदौतोऽस्वाव्यि
३७ क्यच्यसक्सल्लालसायाम्
३८ वृषाश्वयोर्मैथुने
३९ क्षुत्तृड्गर्धेऽशनायोदन्यधना-यम्
४० ध्वौ चास्यानव्ययस्येः
४१ यङ्लेङ्कृति चर्दचो रीदीर्घौ
४२ ( शिरसोऽन्ये तद्धिते शी-र्षन् )
४३ ( केशे वा )
४४ ( शीर्षोऽचि )
४५ विन्मतोरलुक् णीष्ठेयसि
४६ कन्वाल्पयूनोः
४७ +प्रशस्यस्य श्र.
४८ वृद्धस्य च ज्यः
४९ ज्यायान्
५० वर्षः
५१ बाढान्तिकयोस्साधनेदौ
५२ प्रियस्थिरस्फिरोरुगुरुबहुल-तृप्रदीर्घवृन्दारकस्येम्नि च प्रास्थास्फावर्गबंहत्रप्द्राघवृ-न्दम्
५३ रः पृथुमृदुकृशभृशदृढपरि-वृढस्योः
५४ बहोर्णीष्ठे भूय्
५५ भूर्लुक् चेः
५६ स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्रस्य स्वादेरेङ् चेक.
५७ त्रन्त्याजादेः
५८ नैकाचः
५९ ( दण्डिहस्तिनः फे)
६० वाशिजिह्माश्यध्वाथर्वयूनः पिढलठाके
६१ येनोऽन्ये
६२ आणि
६३ (गाथिविदथिकेशिपणिगणि-संयोगादेरिन.)
६४ (अनपत्ये)
६५ (ञोऽवर्मणः)
६६ (आत्मन्)
६७ (जातौ)

६८ (औक्षम्)
६९ सब्रह्मचारिपीठसर्पिकलापिकुथुमितैतलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणोऽपदस्य
७० (चर्मिवुनः कोशसंकोचे)
७१ विकारापत्येऽश्मद्वितनाम्नो वा
७२ स्वरादीनाम्
७३ विंशतेस्तेर्डिति
७४ एः
७५ (अन्होऽस्याटि)
७६ (चन्द्रवद्धृतराष्ट्रोऽणि)
७७ तैषपौषं मात्
७८ (विल्वकां छस्य)
७९ (हलो यश्च्विवक्यानात्यापत्यस्य)
८० (राजन्यमनुष्ययोर्नके)
८१ (ओर्देऽकद्रू)
८२ अवस्वयम्भुव.
८३ (केकयमित्रयुप्रलयसेय्यादेर्ञिणति)
८४ आरैचोऽश्वादेः
८५ (देविकाशिंशपादीर्घसत्रश्रेयसां सत्प्राशेरा.)
८६ (वहीनरस्यैत्)
८७ पदेष्वष्टैच्
८८ द्वारादेः
८९ (न्यग्रोधस्य प्रकृतेः)
९० श्वत्रादेः
९१ (श्वादेरी)
९२ (इनः)
९३ (पदस्यानौ वा)
९४ (प्रोष्ठभद्राज्जाते)
९५ (अंशादृतोः)
९६ (सुसर्वार्धाद्राष्ट्रस्य)
९७ (दिशोऽमद्रस्य)
९८ (प्राग्ग्रामाणाम्)
९९ (संख्याधिकाभ्यां वर्षस्याभाविनि)
१०० (मानसंवत्सरस्याशाणकुलिजस्यानाम्नि)
१०१ (परिमाणस्यानतोऽर्धाद्वादेः)
१०२ (प्राद्वाहणस्य दे)
१०३ (दस्य)
१०४ (नञक्षेत्रक्षेत्रज्ञकुशलचपलनिपुणशुचेः)
१०५ (जङ्गलधेनुवलजस्य चोत्तरपदस्य च)
१०६ हृद्भगसिन्धोः
१०७ (नगरस्य प्राचु)
१०८ अनुशतिकादीनाम्
१०९ (राजपौरुष्यम्)
११० (देवतादादौ)
१११ (नेन्द्रवरुणस्यात्)

११२ (श्रौणद्वत्यपैवत्यसार्वेश्वाक्रमैत्रेयहिरण्मयम्)

११३ (वान्तमान्तितमान्तितोऽन्तियान्तिपद्)

॥ इति शाकटायनीयसूत्रपाठे द्वितीयस्याध्यायस्य तृतीयः पादः ॥

१ (वायात्)

२ (गोत्रोत्तरपदाद्गोलादियाजिशाहरितकात्यात्)

३ (गोर्योऽचि)

४ प्राग् जितादण्

५ (धनादेः पत्युः)

६ पत्युत्तरपदयमादित्यदित्यदितेर्ण्योऽणपवादे चास्वे

७ (बहिषष्टीकण् च)

८ कल्यग्नेर्ढण्

९ पृथिव्या ञाञ्

१० (उत्सादेरञ्)

११ (बष्कयादसमासे)

१२ देवाद्यञ्च

१३ (स्थाम्नोऽत्)

१४ (लोम्नोऽपत्येषु)

१५ (लुग् द्विगोरलुचोऽनपत्येऽज्यादेः)

१६ स्त्रीपुंसात् ञ्नञ्स्नञ्वतः

१७ (त्वे वा)

१८ इञोऽपत्ये

१९ (आद्यात्)

२० वृद्धाद्यूनि

२१ अत इञ्

२२ (गोत्रे बाह्वादिभ्यः)

२३ (वर्मणोऽचक्रात्)

२४ (अजादिभ्यो धेनोः)

२५ (ब्राह्मणाद्वा)

२६ (साम्भूयाम्भ्यामितौज्यौदिपाडिवाद्वलिः)

२७ सुधातृव्यासवरुटनिषादचण्डालबिम्बस्याकङ् च

२८ पुनर्भूपुत्रदुहितृननान्दस्योऽनन्तरेऽञ्

२९ (पारशवः)

३० (बिदादेर्वृद्धेऽनृष्यानन्तर्ये)

३१ (कुञ्जादेर्ञ्फः)

३२ (नडादिभ्यः फण्)

३३ यञिञः

३४ (हरितादेरञः)

३५ (क्रोष्टृशलङ्कोर्लुक् च)

३६ (शरद्वच्छुनकरणाभिशर्मक्रप्णदर्भाद् भृगुवत्सवासिष्ठवृषगणब्राह्मणाग्रायणे)

३७ (द्रोणपर्वतजीवन्ताद्वा)

३८ गर्गादेर्यञ्

३९ (मधुबभ्रोर्ब्राह्मणकौशिके)

४० +(कपिबोधादाङ्गिरसे)
४१ (वतण्डात्)
४२ (स्त्रिया लुक्)
४३ (अश्वादेः फञ्)
४४ (शफभरद्वाजादात्रेये)
४५ (भर्गात्त्रैगर्तभारद्वाजे)
४६ (शिवाद्यृष्यन्धकवृष्णिकुरुभ्योऽपत्येऽण्)
४७ (विकर्णच्छगलाद्वात्स्यात्रेये)
४८ (शुङ्गाभ्या भारद्वाजे)
४९ कन्यात्रिवेण्यो कनीनत्रिनणौ च
५० (विश्रवसो नड्रवणौ)
५१ सङ्ख्यासम्भद्रान्मातुर्डुर्
५२ (नदीमानुषीनाम्नोऽरो)
५३ (पौलामण्डूकाद्वा)
५४ दितेश्च डण्
५५ ञ्यत
५६ (द्व्यचोऽनद्या)
५७ (इतोऽनिञ)
५८ (शुभ्रादिभ्य)
५९ (लक्ष्मणश्यामाद्वासिष्ठे)
६० (विकर्णकुषीतकात् काश्यपे)
६१ (भ्रुवेय)
६२ कल्याण्यादेरिन् च
६६ + (कुलटाया वा)
६७ (क्षुद्राभ्यो ढण् वा)
६५ (गोधाया दुष्टे)
६६ (पण्डजण्डाच्चारग्)
६७ (चटकादैरण)
६८ (चटका)
६९ (गृष्ट्यादिभ्यः पाञ्चो ढञ्)
७० (वाडवेयो वृषे)
७१ भ्रातुर्व्ये
७२ स्वमुश्च ड
७३ मातृपित्रादेर्ड्वेणण्डणो
७४ (रेवत्यादेष्ठग्)
७५ (स्त्रीवृद्धाद्वर्हे णश्च)
७६ (सुयाम्नः सौवीरेषु फिञ्)
७७ (फाण्टाहृतिमिमताण्णश्च)
७८ (भागवित्तितार्णबिन्दवाकशापेयाद्वर्हे ठण् वा)
७९ (वृषमुयामयमुन्दात् फिनश्च)
८० (कुर्वादेर्ञ्य)
८१ (सम्राजः क्षत्रिये)
८२ (कारिसेनान्तलक्षणादिञ्च)
८३ (तिकादेः फिञ्)
८४ (दगुकोसलकर्मारच्छागवृषाद्यट् च)
८५ (द्व्यचोऽण)
८६ (दोर्वावृद्धात्)
८७ (पुलान्तात्)
८८ (काकलक्ष्मणादिनृपस्थरा-

